'मास्टर' मणिमालायाः ४८ संख्यको मणिः ( कर्मकाण्डविभागे १२ )

* भाषाटीकासहिता *

# मूलशान्ति-पद्धतिः

❀ प्रारभ्यते ❀

रचयिता—स्व० पं० श्रीवायुनन्दनमिश्रः

टीकाकारः—पं० श्रीअग्निनारायणमिश्रः

[ मूल्य ४४ नये पैसे




ग्रन्थकर्ता—स्व० पं० श्रीवायुनन्दनमिश्रः, कर्मकाण्डी।

स्व० पण्डितश्रीवायुनन्दनमिश्रप्रणीता

# मूलशान्तिपद्धतिः

[ भाषाटीकासहिता ]



श्रीगणेशाय नमः ॥ अथ मयूखानुसारी गोमुखप्रसवकारिका-प्रारम्भः ॥ ततो गर्गः ॥ पूषाश्विनौ गुरौ सार्प-मघा-चित्रेन्द्र-मूलभे ॥ एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥ १ ॥ जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने ॥ कृत्वाऽभ्यङ्गादिकं सर्वं गृहालङ्कार-पूर्वकम् ॥ २ ॥ गोमयेनोपलिप्याथ गृहमीशानभागके ॥ पङ्कजं कर्णि-कायुक्तं रजोभिः श्वेतवर्णकैः ॥ ३ ॥ व्रीहींस्तत्र विनिक्षिप्य यथा-वित्तानुसारतः ॥ नवशूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥ ४ ॥

अशक्तश्चाष्टसंख्यं वा दधिमध्वाज्यसंयुतम् ॥ आदित्यादिग्रहाणां च कुर्यात् होमं समन्त्रकम् ॥ २१ ॥

इति गोमुखप्रसवकारिका समाप्ता ।

श्रीगणेशाय नमः ॥ अथ गोमुखप्रसवशान्तिप्रयोगः ॥ आचम्य प्राणानायम्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च सम्प्रोक्ष्य ॥ हस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन् सुमुखश्चै-कदन्तश्चेत्यादि मङ्गलमन्त्रान् पठेत् ॥ सङ्कल्पः ॥ ॐ तत्सदद्य मासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रः अमुक-शर्मा सपत्नीकोऽहं अस्य बालकस्य ( मूलादि ) अमुकनक्षत्रोत्पत्तिसू-चितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवशान्तिं करिष्ये ॥ तदङ्गत्वेन स्वस्ति पुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनं आयु-

ष्यमन्त्रजपं नान्दीश्राद्धं आचार्यादिवरणानि च करिष्ये ॥ तत्रादौ निर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः पूजनमहं करिष्ये ॥ [ केचिन्मते केवलं गणेशपूजनमाचार्यवरणं कुर्यात् ] यथोपचारैः ग्रहशान्त्य-नुसारेण पूजनं कुर्यात् ॥

गोमुखप्रसवशान्तिप्रयोग लिखते हैं। यजमान आचमन कर प्राणायाम करै। 'अपवित्रः पवित्रो वा०' इस मंत्र से अपने ऊपर तथा पूजन सामग्री पर जल छिड़कै। यजमान हाथ में लाल अक्षत तथा पुष्प लेकर 'आनोभद्रा०' इस मंगल मंत्र का पाठ करै। इसके बाद यजमान अपने हाथ में द्रव्य, अक्षत, पूगीफल, जल, त्रिकुश लेकर संकल्प करे। 'गोमुखप्रसवशान्ति करिष्ये' यजमान जल को छोड़ दे। पुनः जल अक्षत लेकर 'तदङ्गत्वेन०' से लेकर, 'आचार्यादि वरणानि च करिष्ये' तक पढ़कर जल छोड़े। ( किसी आचार्य के मत से केवल गणेशपूजन आचार्यवरण इतना ही है ) मातृका आदि का, ग्रहशान्ति के अनुसार, आवाहन पूजन करै।

ततो वरणद्रव्यं गृहीत्वा अस्मिन् गोमुखप्रसवशान्तिकर्मणि

एभिर्वरणद्रव्यैः अमुकगोत्रममुकशर्माणं ब्राह्मणमाचार्यत्वेन त्वामहं वृणे ॥ वृतोऽस्मि ॥ प्रार्थना ॥ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिनाचार्यो भव सुव्रत ॥ एवं ब्रह्म-वरणमपि कुर्यात् ॥

तब यजमान वरणसामग्री लेकर, संकल्प करै। 'अस्मिन् गोमुखप्रसवशान्ति-कर्मणि आचार्यत्वेन त्वामहं वृणे' ऐसा कहके आचार्य के हाथ में वरण दे। आचार्य कहै, 'वृतोऽस्मि' तब आचार्य की, 'आचार्यस्तु' से प्रार्थना करे। इसी प्रकार ब्रह्मा आदि ब्राह्मणों का वरण करना चाहिये।

ततः आचार्यः श्वेताष्टदलं विरच्य तस्योपरि द्रोणपरिमितं वा यथाशक्ति व्रीहीन्निक्षिप्य तस्योपरि वंशशूर्पं निधाय शूर्पे तिलान् दर्भांश्च विकीर्य तस्योपरि रक्तवस्त्रं प्रसार्य प्राङ्मुखं शिशुं निधाय माङ्गलिकसूत्रेण शूर्पं वेष्टयित्वा शिशुसमीपे गोमुखमानीय प्रसवं भावयित्वा मिलितेन पञ्चगव्येन विष्णुर्योनिमिति मन्त्रेण शिशुं

स्नापयित्वा ( तत्र मन्त्रः ) ॐ विष्णुर्योनिं कल्पयतु त्वष्टारूपाणि विंशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ इति ।

तब आचार्य श्वेत अष्टदल बनाकर उसके ऊपर द्रोण परिमित ( याने १२८ मुट्ठी ) अथवा यथाशक्ति धान रखकर, उसके ऊपर बाँसका सूप रखे । सूप में तिल, कुश फैलाकर और लाल कपड़ा बिछा कर, पूर्व मुख बालक को सुला कर, मांगलिक सूत्र लपेट कर, उसके समीप गोमुख लगाकर, प्रसव भावना कर, मिले हुए पंचगव्य से 'विष्णुर्योनिं' इस मंत्र को पढ़ता हुआ, शिशु को स्नान करावे ।

गवामङ्गेषु इति मन्त्रेण सर्वाङ्गेषु स्पृशेत् ॥ तत्र मन्त्रः ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ॥ यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ इति गां स्पृशेत् ॥ ततो विष्णोः श्रेष्ठेनेति मन्त्रेण आचार्यः शिशुमादाय मात्रे दद्यात् ॥ तत्र मन्त्रः ॥ ॐ विष्णोः श्रेष्ठेन रूपेणास्यां नार्यां गवीयां पुमांसं पुत्रानाधेहि दशमे मासि सूतवे ॥ ततो माता पित्रे दद्यात् ॥ ॐ अङ्गादङ्गादितिमन्त्रेण शिशुं

मूर्ध्नि त्रिरवघ्राय मात्रे दद्यात् ॥ ॐ अङ्गादङ्गात्सम्भवसि हृदयादभि-
जायते ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इति ॥
आचार्य आपो हिष्ठेति शिशुं पञ्चगव्येनाभिषिञ्चेत् । तत्र मन्त्रः ॥
ॐ आपो हिष्ठा मयो भुवस्ता न ऽऊर्जे दधातन ॥ महेरणाय
चक्षसे ॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव
मातरः ॥ ॐ तस्माऽअरं गमाम वो यस्य क्षयाय जिन्वथ । आपो
जनयथा च नः ॥

'गवामङ्गेषु' इस मंत्र से गौका स्पर्श करै । तब 'विष्णो श्रेष्ठेन' इस मंत्र से
आचार्य शिशु को लेकर, माता की गोद में दे । तब माता पिता को दे । पिता 'अंगा-
दंगाद्' इस मंत्र से बच्चे के शिर को तीन बार सूंघ कर माता को देदे । पुनः आचार्य
'आपो हिष्ठा' इस मंत्र से बच्चे का पंचगव्य से सेचन करै ।

ततः पिता गोमुखप्रसवकर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥
आचार्यः ॐ पुण्याहं पुण्याहं पुण्याहमिति ब्रूयात् ॥ तत आचार्याय

सवत्सां गां दद्यात् ॥ तत्र सङ्कल्पः ॥ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं कृतैतद्गोमुखप्रसवशान्तिकर्मणः साङ्गतासिद्ध्यर्थं इमां गां सवत्सां सोपस्करसहितां रुद्रदैवत्याममुकगोत्रायामुकशर्मणे ब्राह्मणायाऽऽचार्याय तुभ्यमहं सम्प्रददे ॥ दक्षिणासङ्कल्पः । कृतैतत्सवत्सगोदानकर्मणः साङ्गतासिद्ध्यर्थं दक्षिणाद्रव्यं आचार्याय तुभ्यमहं सम्प्रददे ॥ यथाशक्ति ग्रहप्रीत्यर्थं गोवस्त्र-स्वर्णधान्यादि दत्वा भूयसीं दक्षिणां दद्यात् ॥ देशकालौ सङ्कीर्त्य गोत्रः शर्मा सपत्नीकोऽहं कृतैतद्गोमुखप्रसवशान्तिकर्मणः साङ्गतासिद्ध्यर्थं तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानानां गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां विभज्य दातुमहमुत्सृजे ॥

तब यजमान मूल में लिखे हुए पुण्याहवाचन वाक्य को पढ़ें आचार्य 'पुण्याहं'

ऐसा ३ बार कहै। यजमान गोदान का संकल्प करके आचार्य को सवत्सा गौ दे। दक्षिणा संकल्प करै। 'कृतैतत्सवत्स० आचार्याय तुभ्यमहं सम्प्रददे' आचार्य को यथाशक्ति सुवर्णादि देकर भूयसीदक्षिणा का संकल्प करै।

तत आचार्यः पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ॥ समन्त्रकग्रहान् संस्थाप्य सम्पूज्य ॥ ततः कुशकण्डिकां विधाय आज्यभागान्तं कृत्वा आपो हिष्ठेति तृचेन अप्सु म इत्यृचा च विष्णुं तद्विष्णोरित्यृचा यक्ष्महणमक्षीभ्यामिति सूक्तेन ग्रहांश्च प्रत्येकमष्टादिसंख्यया दधिमध्वाज्यैः शेषेण स्विष्टकृदन्तं च कुर्यात् ॥

तब आचार्य पंचभू-संस्कार अग्निस्थापन करे। इसके बाद ग्रहों का स्थापन पूजन करे। तदनन्तर कुशकण्डिका कर 'आपो हिष्ठा' इस मंत्र से जल वरुण 'तत्त्वाया०' 'तद्विष्णो०' 'विष्णुयक्ष्महणं०' इससे ग्रहों को प्रत्येक को अट्ठाइस (या आठ) आहुति देकर बचे हुए दधि मधु घी से स्विष्टकृदाहुति करै।

ततोऽग्नेरीशान्यां कुम्भं संस्थाप्य तत्र पञ्चगव्यतिलव्रीहिक्षीर-

ततोऽग्नेरीशान्यां कुम्भं संस्थाप्य तत्र पञ्चगव्यतिलव्रीहिक्षीर-
द्रुमकषायान् क्षिप्त्वा वस्त्रयुग्मेनावेष्ट्य पूर्णपात्रोपरि तद्विष्णोरिति
मन्त्रेण विष्णुप्रतिमां तत्त्वायामि इति वरुणस्याक्षीभ्यामिति यक्ष्मह-
णश्च प्रतिमामभ्यर्च्य य इन्द्रेति षड्टृचो जप्त्वाऽन्वाधानक्रमेण हुत्या
कर्मशेषं समापयेत् ॥ तत्र क्रमः ॥ कलशस्थापनविधिना कलशं
प्रतिष्ठाप्य तस्योपरि ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥
दिवीव चक्षुराततम् ॥ विष्णवे नमः ॥ विष्णुं० ॥ ॐ तत्त्वा यामि
ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणे
हवोध्युरुशꣳ समान ऽआयुः प्रमोषीः ॥ वरुणाय नमः ।
वरुणमा० ॥ ॐ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चिबुकादधि ॥
यक्ष्मꣳशीर्षण्यं मस्तिष्का जिह्वाया विवृहामि ते ॥ यक्ष्मणे नमः ॥
यक्ष्माणमावा० ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं
तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवा स ऽइह मादय-

न्तामो २ ॥ प्रतिष्ठ ॥ विष्ण्वाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य ॥ विष्ण्वाद्यावाहितदेवताभ्यो नमः, इति सम्पूज्य ॥ ततः स्पृष्ट्वा वक्ष्यमाणमन्त्रान् जपेत् ॥ ॐ यत इन्द्रं भयामहे ततो नोऽअभयं कृधि ॥ मघवञ्छग्धि तव तन्न ऊतिभिर्वि-द्विषो विमृधो जहि ॥ १ ॥ त्वं हि राधसस्पते राधसोमहः क्षय-स्यांसि विधत्तः ॥ तं त्वा वयं मघवन्निन्द्रगिर्वणः ॥ सुतावन्तो हवामहे ॥ २ ॥ इन्द्रस्य कुत वृत्रहा परस्यानो वरेण्यः । स नो रक्षियच्चरमं समध्यमं स पश्चात्पातु नः पुरः ॥ ३ ॥ त्वन्नः पश्चादध-रादुत्तरा पुर ऽइन्द्रं निपाहि विश्वतः ॥ आरे अस्मत्कृणुहि दैव्यं भयमारेहेतीरदेवीः ॥ ४ ॥ अद्याद्याश्वश्व इन्द्रत्राश्वपरे च नः ॥ विश्वा च नो जरितृन्त्सत्पते अहा दिवा नक्तं चरक्षिषः ॥ ५ ॥ प्रभंगी शूरो मघवा तुवी मघः संमिलो वीर्यायकम् ॥ उभा ते बाहु

प्रभंगी शूरो मघवा तुवी मघः सम्मिलो वीर्याय कम् ॥ उभा ते बाहु वृषणा शतक्रतो निया वज्रं मिमिक्षतुः ॥ ६ ॥ इति जप्त्वा मिलितैर्दधिमध्वाज्यैर्होमं कुर्यात् ॥

तब अग्नि के ईशान कोण में कलश स्थापन कर, कलश में पंचगव्य तिल धान्य दूध वाले वृक्ष की छाया को ( यथा बड़ इत्यादि ) छोड़ कर, दो वस्त्रों को लपेट कर, पूर्णपात्र पर 'तद्विष्णो०' इस मंत्र से विष्णु की, 'तत्त्वायामि०' इससे वरुण की, 'अक्षीभ्यां०' इससे यक्ष्मा की प्रतिमा की पूजा कर 'ॐ यत इन्द्रेति' छ ऋचाओं का जप कर, अन्वाधान क्रम से हवनकर, कर्म की समाप्ति करना।

ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम ॥ इन्द्राय स्वाहा। इदमिन्द्राय० ॥ ॐ अग्नये स्वाहा ॥ इदमग्नये० ॥ ॐ सोमाय स्वाहा ॥ इदं सोमाय ॥ ॐ इमानि हवनीयद्रव्याणि या या यक्ष्माणदेवतास्ताभ्यस्तेभ्यः ॥ मया परित्यक्तं न मम यथा दैवतमस्तु ॥ ॐ आपो हि ष्ठा मयो भुवस्ता न ऽऊर्जे दधात न। महे रणाय चक्षसे स्वाहा ॥ १ ॥ इदमद्भ्यो० ॥ १ ॥ ॐ यो वः शिवतमो

रसस्तस्य भाजयते ह नः ॥ उशतीरिव मातरः स्वाहा ॥ इदमद्भ्यो० ॥ २ ॥ ॐ तस्मा ऽअरं गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः स्वाहा ॥ इदमद्भ्यो० ॥ ३ ॥ ॐ अप्सु मे सोमो ऽअब्रवीदन्तर्विश्वानि भेषजाः ॥ अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः स्वाहा ॥ इदमद्भ्यो० ॥ १ ॥ ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥ दिवीव चक्षुराततं स्वाहा ॥ इदं विष्णवे० ॥ २ ॥ ॐ अक्षीभ्यां नासिकाभ्यां कर्णाभ्यां चिबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वया विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥ ॐ ग्रीवाभ्यस्त उष्णिहाभ्य कीकसाभ्यो अनूक्यात् ॥ यक्ष्मं दोषण्यंसाभ्यां बाहुभ्यां विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे०॥४॥ ॐ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ॥ यक्ष्मं मतस्नाभ्या यक्नः प्लाशिभ्यो विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥ ५ ॥

यक्ष्मं श्रोणिभ्यां विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥ ५ ॥

ॐ उरुभ्यां तेऽअष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां यक्ष्मं श्रोणीभ्यां मासदाद्धं ससा विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥ ६ ॥ ॐ मेह-नाद्धनं करणाल्लोमभ्यस्ते नखेभ्यः ॥ यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥७॥ ॐ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि ॥ यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते स्वाहा ॥ इदं यक्ष्मणे० ॥ ८ ॥ इति ॥

इसका क्रम १-८ तक ऊपर मूल में दिया है ।

ततो ग्रहशान्त्यनुसारेण सूर्यादिग्रहाणां समन्त्रकं समित्तिल-चर्वाज्यद्रव्यैः होमं कुर्यात् ॥ तत अग्निं सम्पूज्य स्वाहास्वधायुताग्नये वैश्वानराय नमः इति मन्त्रेण ॥ ततो हुतशेषं गृहीत्वा ब्रह्मणान्वा-रब्धः स्विष्टकृद्धोमं कुर्यात् ॥ ॐ अग्नये स्विष्टकृते स्वाहा ॥ इद-मग्नये स्विष्टकृते न मम ॥ तत आज्येन भूरादिनवाहुतिं कुर्यात् ॥

तदनन्तर ग्रहशान्ति के अनुसार सूर्यादि ग्रहों का समिधा तिल चरु घी से हवन करना। तब 'स्वाहा स्वधा०' इससे अग्नि की पूजा कर, शेष हवन करने से जो द्रव्य बचा हो उसे अग्नि में छोड़ै। 'अग्नये स्विष्टकृते०' इससे स्विष्टकृदाहुति कर, घी से भूरादि नवाहुति करै। इसका क्रम नीचे मूल में है।

तद्यथा ॐ भूः स्वाहा ॥ इदमग्नये० ॥ ॐ भुवः स्वाहा ॥ इदं वायवे० ॥ ॐ स्वः स्वाहा इदं सूर्याय० ॥ ॐ त्वन्नो अग्ने० स्वाहा। इदं वरुणाय० ॥ ॐ सत्वन्नो अग्ने० स्वाहा ॥ इदं वरुणाय० ॥ ॐ अयाश्चाग्ने० स्वाहा ॥ इदं अग्नये अयसे न मम ॥ ॐ ये ते शतं० स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे० ॥ ॐ उदुत्तमं स्वाहा ॥ इदं वरुणायादित्याय० ॥ ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये न मम ॥ संस्रवप्राशनम्। आचमनम् ॥ पवित्राभ्यां मार्जनम् ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ कृतैतद्गोमुखप्रसवशान्तिकर्मणोऽङ्गतया विहितमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे

णोऽङ्गतया विहितमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे

ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ अग्नेः पश्चादैशान्यां वा प्रणीताविमोकः । उपयमनकुशैः विमोकोदकेन मार्जयेत् ॥ तत्र मन्त्रः ॥ ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥

प्रोक्षणी में शेष घी हो उसमें से यजमान को प्राशन करा दे। आचमन कुश पवित्री से यजमान के ऊपर मार्जन कर ब्रह्मा के पूर्णपात्र का संकल्प करै। 'कृतैतत् गोमुख०' इससे संकल्प करके 'तुभ्यमहं सम्प्रददे ।' ब्रह्मा को पूर्णपात्र दे। अग्नि के पश्चिम प्रणीता का जल गिरा कर उपयमन कुशा से मार्जन करै, यजमान के ऊपर 'ॐ आपः शिवा०' इस मन्त्र से।

ब्राह्मणभोजनसङ्कल्पः ॥ कृतैतद्गोमुखप्रसवशान्तिकर्मणः साङ्गतासिद्ध्यर्थं यथासंख्याकान् ब्राह्मणान् भोजयिष्ये ॥ भूयसीं दक्षिणां ॥ पूर्ववत्सङ्कल्पं कृत्वा ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ यान्तु

देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ इति विसर्जनम् ॥ इति गोमुखप्रसवशान्तिप्रयोगः ॥

तब ब्राह्मणभोजन का संकल्प यजमान कर, भूयसी दक्षिणा का संकल्प कर, 'प्रमादात्' इसका पाठ कर 'यान्तु देवगणा०' से विसर्जन करै।

श्रीगणेशाय नमः ॥ अथ मूलशान्तिविधिः ॥ शौनकः ॥

अथातः सम्प्रवक्ष्यामि मूलजातहिताय वै ॥ मातापित्रोर्धनस्यापि कुलज्ञातिहिताय च ॥ त्यागो वा मूलजातस्य ह्यष्टाद्वाद्वाऽप्रदर्शनम् ॥ अभुक्तमूलजातानां परित्यागो विधीयते ॥ अदर्शनाद्वापि पितुः स तु तिष्ठेत् समाष्टकम् ॥ लल्लः ॥ अभुक्तमूलसम्भवं परित्यजेत्तु बालकम् । समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥ तद्वाद्यपादके पिता जनन्यथ द्वितीयके तृतीयके धनक्षयश्चतुर्थके शुभावहम् ॥ प्रतीपमन्यपादतः फलं तदेव सार्पभे ॥ अभुक्तमूलं त्वाह बृहद्वशिष्ठः ॥

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ॥ अभुक्तमूलमित्याहुर्जातं तत्र विवर्जयेत् ॥ केचिज्ज्येष्ठान्त्यं मूलाद्यं च पादं भुक्तमूलमित्याहुः ॥ कश्यपेन त्वन्यथोक्तम् ॥ मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः ॥ मातरं स्वां तृतीयोऽर्थान् सुहृदं तु तुरीयजः ॥ फलं तदेव सार्पर्क्षे[1] प्रतीपं त्वन्यपादजः ॥ एवं दुहितरि प्रोक्तं मूलजायां फलं बुधैः । कन्यायां तु विशेषः ॥ न बाला हन्ति मूलर्क्षे पितरं मातरं तथा ॥ मूलजा श्वसुरं हन्ति व्यालजा[1] च तदङ्गनाम् ॥ माहेन्द्रं[2] चाग्रजं हन्ति देवरञ्च द्विदैवजा[3] ॥ अथातो मूलविधिं व्याख्यास्यामो मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्ययोश्चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यान्मूलनक्षत्रे मूलविधानं कुर्यात् ॥ शान्तिर्वा पुष्कला चेत् स्यात्तर्हि दोषो न कश्चन, इति ॥

---

टि० १ आश्लेषा । २ ज्येष्ठा । ३ विशाखा ।

मू० मुख्यकालं प्रवक्ष्यामि शान्तिहोमं जपं ततः ॥ जातस्य द्वादशाहे
१० च जन्मर्क्षे वा शुभे दिने ॥ समाष्टके द्वादशाब्दे कुर्याच्छान्तिकमा- शा०
दरात् ॥

## ❋ अथ मूलशान्तिप्रयोगः ❋

यथोक्तगोमुखप्रसवं कृत्वा ॥ ततो यजमानः सपत्नीकः सबालकः भद्रासनोपरि प्राङ्मुख उपविश्य दक्षिणतः पत्नीं चोपवेश्य ॥ ॐ माधवाय नमः । ॐ केशवाय नमः । ॐ नारायणाय नमः ॥ इति त्रिराचम्य ॥ ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्प्रसव ऽउत्पुनाम्य- च्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ इति पवित्रधारणं कृत्वा ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य प्राणा- १०

बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य प्राणा-
यामं कुर्यात् ॥ हस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन् मङ्गल-
मन्त्रान् सुमुखश्चैकदन्तश्चेत्यादि मङ्गलश्लोकांश्च पठेत् ॥

प्रयोग लिखते हैं—बतलाये हुए समय में गोमुखप्रसवशान्ति कर के, यजमान सपत्नीक बालक लेकर, सुन्दर पीढ़े पर पूर्वमुख बैठकर, आचमन, प्राणायाम कुश पवित्री धारणकर, हाथ में अक्षत पुष्प लेकर, 'आनोभद्रा०' 'सुमुखश्चैकदन्तः०' इत्यादि मंगल मंत्रों का पाठ करै।

सङ्कल्पः ॥ देशकालौ सङ्कीर्त्य गोत्रः शर्मा सपत्नीकोऽहं अस्य बालकस्य मूलनक्षत्रजननपित्राद्यरिष्टशान्त्यर्थं पञ्चाभिमन्त्रितकलशैः स्नानमहं करिष्ये ॥

तदनन्तर त्रिकुश पुष्प अक्षत पूगीफल जल द्रव्य हाथ में लेकर, 'देशकालौ' से लेकर 'स्नानमहं करिष्ये' तक पढ़ कर संकल्प जल छोड़ै।

तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनमहं करिष्ये ॥ यथोपचारैः गणेशं सम्पूज्य ॥ स्वपुरतः श्वेतपङ्कजं विरच्य तस्योपरि

मू०
११

सप्तधान्यराशिं कृत्वा ॥ तत्र मध्ये शतछिद्रं कलशं निधाय ॥ तच्चतुर्दिक्षु पूर्वादिक्रमेण ( वा ईशानादिक्रमेण ) चतुः—कुम्भान् स्थापनविधिना स्थापयेत् ॥

शा०

पुनः जल लेकर गणेश पूजन का संकल्प करै। तब गणेश पूजन कर, यजमान अपने सामने चावल से श्वेत कमलाकार बना कर, उसपर सप्तधान्य रखकर सौ छिद्र वाले कलश को रख, उसके चारो तरफ पूर्वादि क्रम से या ईशानादि क्रम से प्रारम्भ कर चार कलश, स्थापनविधि से, स्थापन करे।

( अत्र स्थले पञ्चभिः कलशैः स्नानमित्याचारः। स्नानं तु मयूखाद्यनुसारात् कर्मान्ते अभिषेकसमये कुर्यात् इति क्रमः ) तत्राचारक्रमः। तत्प्राक् कुम्भे देवदारु-रक्तचन्दन-कमल-कुष्ठ-प्रियङ्गु-शुण्ठी-मुस्ता-आमलक-वच-सर्षप-अगर-मुरा-मांसी—ऋद्धि-वृद्धि—उशीर- इत्या—दीनि क्षिपेत ॥ रुद्राध्यायं जपेत ॥ ॐ नमस्ते ६६ मन्त्रान ॥

उसी स्थापित कलश के पूर्व वाले में देवदारु, रक्तचन्दनादि सोलह औषधियों को छोड़ै और रुद्राध्याय का पाठ करै।

दक्षिणकुम्भे पञ्चामृतं गजमदतीर्थोदकसप्तधान्यसुवर्णानि क्षिपेत् ॥ ॐ आशुः शिशान १२ मन्त्रान् जपेत् ॥

दक्षिण कलश में पंचामृत, गजमद नाम की औषधि, तीर्थ जल, सप्तधान्य, सुवर्ण छोड़ै। 'आशुः शिशान०' यहाँ से १२ मंत्रों का पाठ करना।

पश्चिमकुम्भे सप्त मृत्तिकाः क्षिपेत् ॥ ॐ कृणुष्वपाजः ५ मन्त्रान् जपेत् ॥

पश्चिम कलश में सप्तमृत्तिका छोड़ै 'कृणुष्वपाजः' पाँच मंत्रों का पाठ करै।

उत्तरकुम्भे पञ्चरत्नवट अश्वत्थ-पलाश-प्लक्ष-उदुम्बराणां पल्लवान् क्षिपेत् ॥ जम्बू-निम्ब-कदम्ब-चिंचिडीक-वट-उदुम्बर-प्लक्ष-आम्राणां मूलं-त्वचः ( छालः ) सप्तविंशतिकूपजलानि च क्षिपेत् ॥ ॐ रक्षोहणमिति चतुर्मन्त्रान् जपेत् ॥

मू०
१२

उत्तर तरफ स्थापित कलश में पंचरत्न, बड़, पीपल, पलाश, पकड़ी, गूलर—इन के पल्लवों को, जामुन आदि आठ वृक्षों के छाल, २२ कूओं का जल छोड़ै। 'रक्षोहणं०' इत्यादि चारो मंत्रों का पाठ करना।

शा०

मध्यगते शतच्छिद्रकुम्भे शतौषधयः ॥ तदभावे यथालाभं सद्वृक्षाणां पल्लवान् । विष्णुक्रान्ता-सहदेवी-तुलसी-शतावरी-कुश-कुंकुमानि च क्षिपेत् ॥ त्र्यम्बकमिति १०८ जपेत् ॥

मध्य में स्थापित सौ छिद्र वाले कलश में शतौषधि, उसके अभाव में अच्छे वृक्षों का पल्लव, विष्णुक्रान्ता आदि छोड़ना। 'त्र्यम्बकं' इस मंत्र का अष्टोत्तर-शत जप करै।

तत्र सर्वान् कुम्भान् स्थापनविधिना संस्थाप्य ॥ सर्वेषु कुम्भेषु पूर्णपात्रोपरि वरुणमावाह्य सम्पूज्य ॥ सर्वान् सूक्तान् तत्तत्कलशेषु जपित्वा ॥ जपान्ते वंशपात्रे कमलखण्डं प्रसार्य तस्योपरि शतच्छिद्रं कलशं निधाय तन्मध्ये चतुःकुम्भस्थजलं प्रक्षिप्य ॥ ततो यजमानः



सपत्नीको बालकस्योपरि जलधारां कुर्यात ॥

सपत्नीको बालकस्योपरि जलधारां कुर्यात् ॥

कलशों को स्थापनविधि से स्थापन कर, पूर्णपात्र पर वरुण का आवाहनादि पूजन कर, बाँस के सूप, या डलिया में कम्बल के टुकड़े को बिछा कर, उसके ऊपर शतछिद्र कलश को रख कर, चारो कलश के जल से सपत्नीक यजमान बालक का अभिषेक करै।

तत्र मन्त्राः ॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्रा-ज्येनाभिषिञ्चाम्यसौ ॥ १ ॥ ॐ देवस्य त्वा० ॥ सरस्वत्यै व्वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ २ ॥ ॐ देवस्य त्वा० ॥ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन व्वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषि-ञ्चामि ॥ ३ ॥ ॐ व्विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रं

तन्नऽआसुव ॥ ४ ॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ॥ स चेतसो व्विश्वेदेवा यज्ञं प्रावन्तु नः शुभे ॥ ५ ॥ त्वं यविष्ठदाशुषो नॄँ पाहि शृणुधी गिरः ॥ रक्षातोकमुतत्वमना ॥ ६ ॥ ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ॥ प्प्रदातारं तारिष ऽऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ॥७॥ ॐ द्यौः शान्तिरन्तरिक्ष६ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्पतयः शान्तिर्व्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्व६ शान्तिः शान्तिरेव शान्ति सामा शान्तिरेधि ॥ यतो यतः समीहसे ततो नो ऽअभयं कुरु ॥ शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥ इत्यभिषेकः ॥

सू० १३ — शा०

'देवस्य त्वा०' से 'द्यौः शांति०' तक ब्राह्मण पाठ करै ।

ततो यजमानः सपत्नीकः क्षौरनखनिकृन्तनं विधाय कृताभ्यङ्गो स्नानं कुर्यात ॥ धौते वाससी परिधाय ॥ शुभासने प्राङ्मुख उप-

१३

स्नानं कुर्यात ॥ धौते वाससी परिधाय ॥ शुभासने प्राङ्मुख उप-

विश्य स्वदक्षिणतः पत्नीं चोपवेश्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च सम्प्रोक्ष्य ॥ ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ इति पवित्रधारणं कृत्वा ॥ ॐ माधवाय नमः । ॐ केशवाय नमः । ॐ नारायणाय नमः ॥ इति त्रिराचम्य ॥ प्राणायामत्रयं कृत्वा ॥

इस के बाद यजमान अपनी पत्नी के साथ बाल तथा नाखून कटवाकर, सुगंधित तेल लगाकर, स्नान करै । पत्नी अपने पैर में महावर आदि लगा कर शुद्ध रेशमी वस्त्र या सूती वस्त्र पहने । यजमान शुभासन पर पूर्वमुख बैठ कर, अपने दक्षिण तरफ पत्नी को बैठा कर आचमन करै । ॐ केशवाय नमः ॥ ॐ नारायणाय नमः ॥ ॐ माधवाय नमः ॥ इस से ३ आचमन कर, पवित्रेस्थो०' इस मन्त्र से कुशा की पवित्रो धारण कर, प्राणायाम करै । 'अपवित्रः०' इससे अपने ऊपर तथा

पूजासामग्री पर जल त्रिकुश से छिड़कै ।





हस्ते अक्षतपुष्पाणि गृहीत्वा आनो भद्रादीन् सुमुखश्चैकदन्त-श्चेत्योदिमङ्गलमन्त्रान् पठेत् ॥ कुशपुष्पफलाक्षतजलद्रव्याणि चादाय सङ्कल्पं कुर्यात् ॥ ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीये प्रहरार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे (काश्यां तु आर्यावर्तैकदेशान्तर्गत—अविमुक्तवाराणसीक्षेत्रे आनन्दवने महाश्मशाने गौरीमुखे त्रिकण्टकविराजिते भागीरथ्याः पश्चिमे भागे) अन्यत्र ॥ प्रजापतिक्षेत्रे भागीरथ्यादि अमुकदिग्भागे विक्रमशाके बौद्धावतारे अमुकनामसंवत्सरे श्रीअमुकायने सूर्ये अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे

अमुककरणे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं अस्य बालकस्य मूलनक्षत्रजननसूचितपित्रादिसर्वारिष्टपरिहारार्थं मूलशान्तिं करिष्ये ॥

पुनः अक्षत पुष्प लेकर, 'आनोभद्रा०' आदि का पाठ कर, हाथ में कुश पुष्प यवाक्षत जल पूगीफल द्रव्य लेकर, 'विष्णुः ३' इत्यादि पढ़कर प्रतिज्ञा सङ्कल्प करे। सङ्कल्प में काशी क्षेत्र के लिये विशेष वाक्य है। 'महाश्मशाने से लेकर त्रिकण्टक-विराजिते' तक योजना करना। अमुकतिथौ के स्थान पर वर्त्तमान तिथि वारादिक की योजना करना।

तदङ्गत्वेन स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमन्त्रजपं नान्दीश्राद्धमाचार्यादिवरणानि च करिष्ये ॥ तत्रादौ

निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं च करिष्ये ( ततो गणेशपूजनादारभ्य दिग्रक्षणप्रोक्षणान्तं ग्रहशान्त्यनुसारेण सर्वं कुर्यात् ) ॥

प्रधान सङ्कल्प के बाद यजमान हाथ में जल अक्षत लेकर, 'तदङ्गत्वेन' से लेकर 'आचार्यादि वरणानि च करिष्ये' तक पढ़ कर जल छोड़े । जल अक्षत लेकर 'तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं करिष्ये' इसको पढ़ कर जल छोड़े । गणेश पूजन से लेकर दिग्रक्षण तक ग्रहशान्ति के अनुसार करना चाहिये ।

ततः हवनवेद्याः प्राग्भद्रपीठोपरि श्वेतवस्त्रं प्रसार्य चतुर्विंशति-दलं पद्मं कृत्वा तस्योपरि कलशं प्रतिष्ठाप्य पूर्णपात्रोपरि स्वर्णमयीं निर्ऋतिप्रतिमामधिदेवताप्रत्यधिदेवतासहितामग्न्युत्तारणपूर्वकं स्थापयेत् ( तत्राग्न्युत्तारणं ग्रहशान्त्यनुसारेण कुर्यात् ) अथ मूलनक्षत्रस्य निर्ऋतिप्रधानदेवताः ॥ तत्र मन्त्रः ॥ ॐ असुन्वन्तमयजमान-मिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छसात ऽइत्या

नमो देवि निर्ऋते तुभ्यमस्तु ॥ ॐ भू० निर्ऋतये नमः निर्ऋतिं० ॥ १ ॥ ततो ज्येष्ठाया अधिदेवता इन्द्रः ॥ तत्र मन्त्रः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ॐ भू० इन्द्राय० इन्द्रमा० ॥ २ ॥ ततः प्रत्यधिदेवताः आपः ॥ तत्र मंत्रः ॥ ॐ आपो हिष्ठा मयो भुवस्ता न ऽऊर्ज्जे दधातन ॥ महे रणाय चक्षसे ॥ ॐ भू० अद्भ्यो नमः अप आवाहयामि ॥ ३ ॥

तब पूर्व में भद्रपीठ पर श्वेत कपड़ा बिछा कर, उस पर २४ दल का कमल बनाकर, उसके ऊपर कलश स्थापन कर, सुवर्ण की निर्ऋति की प्रतिमा अधिदेवता प्रत्यधिदेवता सहित अग्न्युत्तारण कर, स्थापन करें। 'असुन्वन्तम०' यह निर्ऋति का मंत्र है। 'त्रातारमिन्द्र०' यह अधिदेव का मन्त्र है। 'आपो हिष्ठा०' यह प्रत्यधिदेव अप का मन्त्र है। उसी प्रकार श्लेषा का अधिदेव सर्प है; मघा का पितृ, जेष्ठा का इन्द्र, रेवती का पूषा, अश्विनी का अश्विनी, तत्तन्मत्रों से अधिदेव

प्रत्यधिदेव की प्रतिमा का स्थापन करे। अग्न्युत्तारण प्राणप्रतिष्ठा ग्रह-शान्ति के अनुसार करना।

ततश्चतुर्विंशतिदलेषु चतुर्विंशद्देवानामावाहनम् ॥ ॐ भू० विश्वेभ्यो० विश्वान् देवानावाहयामि ॥१॥ ॐ भू० विष्णवे० विष्णुमावाहयामि ॥ २ ॥ ॐ भू० अष्टवसुभ्यो० अष्टवसूना० ॥ ३ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ४ ॥ ॐ भू० अजैकपदे० अजैकपादं० ॥ ५ ॥ ॐ भू० अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ ६ ॥ ॐ भू० पूष्णे० पूषाणं० ॥ ७ ॥ ॐ भू० अश्विभ्यां० अश्विनौ० ॥ ८ ॥ ॐ भू० यमाय० यमं० ॥ ९ ॥ ॐ भू० अग्नये० अग्निमा० ॥१०॥ ॐ भू० प्रजापतये० प्रजापतिमा० ॥ ११ ॥ ॐ भू० सोमाय० सोमं० ॥१२॥ ॐ भू० रुद्राय० रुद्रं० ॥१३॥ ॐ भू० अदितये० अदितिमा० ॥ १४ ॥ ॐ भू० बृहस्पतये० बृहस्पतिं० ॥ १५ ॥

ॐ भू० सर्पेभ्यो० सर्पाना० ॥ १६ ॥ ॐ भू० पितृभ्यो पितृना० ॥ १७ ॥ ॐ भू० भगाय० भगमा० ॥ १८ ॥ ॐ भू० अर्यमणे० अर्यमाणं० ॥ १९ ॥ ॐ भू० सवित्रे० सवितारं० ॥ २० ॥ ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥ २१ ॥ ॐ भू० वायवे० वायुं० ॥ २२ ॥ ॐ भू० इन्द्राग्निभ्यां० इन्द्राग्न्योरा० ॥ २३ ॥ ॐ भू० मित्राय० मित्रं० ॥ २४ ॥

तदनन्तर पूर्वदल से प्रारम्भ कर चौबीसों दल में क्रम से २४ नक्षत्र देवों का आवाहन करै। अक्षतपुञ्जपर सोपाड़ी रख कर, उसी पर आवाहन करै। पूर्व में 'विश्वेभ्यो देवेभ्यो नमः ॥ विश्वान्देवाना०' ॥ इसी प्रकार अष्टवसुका आवाहन करै, वरुण का आवा०। अजैकपद का आवा०। अहिर्बुध्न्य का आवा०। पूषा का आवा०। अश्विनी का आवा०। यम का आवा०। अग्नि का आवा०। प्रजापतिका आवा०। सोम का आवा०। रुद्र का आवा०। अदिति का आवा०। बृहस्पति का आवा०। सर्प का आवा०। पितृ का आवा०। भग का आवा०। अर्यमा का आवा०। सविता

मू०
१७

का आवा। विश्वकर्मा का आवा०। वायु का आवा०। इन्द्र-अग्नि का आवा०। मित्र का आवाहन करे।

शा०

ततो मण्डलाद्बाह्ये दशदिक्पालानावाहयेत् ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ १ ॥ ॐ भू० अग्नये० अग्निं० ॥ २ ॥ ॐ भू० यमाय० यमं० ॥ ३ ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू० वायवे० वायुं० ॥ ६ ॥ ॐ भू० सोमाय० सोमं० ॥ ७ ॥ ॐ भू० ईशानाय० ईशानं० ॥ ८ ॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ॐ भू० अनन्ताय० अनन्तं० ॥ १० ॥ अक्षतान्गृहीत्वा ॥ ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवास ऽइह मादयन्तामों प्रतिष्ठ ॥ नैर्ऋत्यादिदेवताः सुप्रतिष्ठिता वरदा भवन्तु ॥ नैर्ऋत्याद्यावाहितदेवताभ्यो नमः, इति पाद्यादिभिर्यथोपचारैः



संपूजयेत् ॥ ततः अग्निस्थापनम् ॥

नमः, इति पाद्यादिभिरुपचारैः

संपूजयेत् ॥ ततः अग्निस्थापनम् ॥

पुनः पूर्वादि क्रम से दशदिक्पालों का आवाहन करे । पूर्व में इन्द्र का आवा० । अग्नि का आवा० । दक्षिण में यम का आवा० । नैर्ऋत्य में निर्ऋति का आवा० । पश्चिम में वरुण का आवा० । वायव्य में वायु का आवा० । उत्तर में सोम का आवा० । ईशान में ईशान का आवाहन करके 'अस्यै प्राणा०' 'मनोजूति०' मन्त्र से 'नैर्ऋत्यादि देवताः सुप्रतिष्ठिताः वरदा भवन्तु' इससे प्रतिष्ठा करके लब्धोपचार से पूजन करै ।

संकल्पः ॥ देशकालौ संकीर्त्य गोत्रः शर्माहं अस्मिन्मूलशान्तिकर्मणि पञ्चभूसंस्कारपूर्वकं अग्निस्थापनं करिष्ये ॥ तत्र क्रमः ॥ कुशैः परिसमूह्य तान्कुशानैशान्यां परित्यज्य ॥ १ ॥ गोमयोदकाभ्यामुपलिप्य ॥ २ ॥ स्फ्येन स्रुवमूलेन वा उत्तरोत्तरक्रमेण त्रिरुल्लिख्य ॥ ३ ॥ उल्लेखनक्रमेण अनामिकांगुष्ठेनोद्धृत्य ॥ ४ ॥ उदकेनाभ्युक्ष्य ॥ ५ ॥ इति पञ्चभूसंस्कारः ॥ ॐ अग्निन्दूतं पुरोदधे

हव्यवाहमुपब्रुवे ॥ देवाँ ऽआसादयादिह इति स्वाभिमुखं निदध्यात् ॥ अग्निपात्रे गन्धाक्षतादि दत्वा ॥ ततोऽग्नेरीशान्यां भद्रपीठोपरि नवग्रहान् संस्थाप्य तत्तन्मन्त्रैः सम्पूज्य ।



हाथ में जल लेकर संकल्प करै, 'अस्मिन् मूलशान्ति-कर्मणि पञ्चभूसंस्कारपूर्वकं अग्निस्थापनं करिष्ये' जल छोड़ कर, पंचभूसंस्कार करै । इसका क्रम यह है । कुश से वेदी झाड़ना, उस कुश को ईशान कोण में फेंक देना । गोबर से वेदी लीपना । स्रुव से या स्फ्यः से दक्षिण से उत्तर तक प्रादेश मात्र तीन रेखा करना । उल्लेखन क्रम से दहिने हाथ की अनामिका अंगुष्ठ से रेखा की मिट्टी को लेकर बाँये हाथ में रखकर कोण में छोड़ देना । तदनन्तर दक्षिण हस्त से वेदी पर जल छिड़कै । काँसे की थाली में अग्नि रखकर, 'अग्निन्दूतं०' इस मन्त्र से अपने मुख की तरफ अग्नि छोड़ना । उस पीढ़े पर नवग्रहों का स्थापन करै । यथा—

तत्र क्रमः ॥ ॐ आकृष्णेन स० ॥ ॐ भू० सूर्याय० सूर्यं० ॥ १ ॥ ॐ इमन्देवा० ॥ ॐ भू० सोमाय० सोमं० ॥ २ ॥ ॐ

॥ १ ॥ ॐ इमन्देवा० ॥ ॐ भू० सोमाय० सोमं० ॥ २ ॥ ॐ अग्निर्मूर्द्धा० ॥ ॐ भू० भौमाय० भौमं० ॥ ३ ॥ ॐ उद्बुध्यस्वाग्ने० । ॐ भू० बुधाय० बुधं० ॥ ४ ॥ ॐ बृहस्पते ऽअति० ॥ ॐ भू० बृहस्पतये० बृहस्पतिं० ॥ ५ ॥ ॐ अन्नात्परिस्रुतो० ॥ ॐ भू० शुक्राय० शुक्रं० ॥६॥ ॐ शन्नो देवी० ॥ शनैश्चराय० शनैश्चरं० ॥७॥ ॐ कया नश्चित्र० ॥ राहवे० राहुं० ॥ ८ ॥ केतुं कृण्व० ॥ केतवे० केतुं० ॥ ९ ॥

'आकृष्णेन०' इस मन्त्र से सूर्य का आवाहन करना। 'इमन्देवा०' से सोम का आवा० ॥ २ ॥ 'अग्निर्मूर्धा' से भौम का आवा० ॥ ३ ॥ 'उदबुध्य०' से बुध का आवा० ॥ ४ ॥ 'बृहस्पते०' से बृहस्पति का आवा० ॥ ५ ॥ 'अन्नात्परिस्रुतो'० से शुक्र का आवा० ॥ ६ ॥ 'शन्नो देवी०' से शनि का आवा० ॥ ७ ॥ 'कया नश्चित्र०' से राहु का आवा० ॥ ८ ॥ 'केतुं कृण्व०' से केतु का आवा० ॥ ९ ॥

( अधिदेवता दक्षिणे ) ॐ त्र्यम्बकं० ॥ ईश्वराय० ईश्वरं० ॥ ॐ श्रीश्च ते० ॥ उमायै० उमां० ॥ ॐ यदक्रन्दः प्र० स्कन्दाय

स्कन्दं० ॥ ॐ व्रिष्णो रराट० व्रिष्णवे० व्रिष्णुं० ॥ ॐ आब्रह्मन्० ब्रह्मणे० ब्रह्माणं० ॥ ॐ सयोषा इन्द्र० इन्द्राय० इन्द्रं० ॥ ॐ यमाय त्वा० यमाय० यमं० ॥ ॐ कार्षिरसि० कालाय० कालमा० ॥ ॐ चित्रावसो० चित्रगुप्ताय० चित्रगुप्तम् ॥

'त्र्यम्बकं०' इस मन्त्र से सूर्य के दक्षिण भाग में ईश्वर का आवाहन करै ॥ १ ॥ इसी प्रकार प्रत्येक ग्रहों के अधिदेव का दक्षिण भाग में आवाहन करना। 'श्रीश्च ते०' से उमा का आवा० ॥२॥ 'यदक्रन्द०' से स्कन्द का आवा० ॥ ३ ॥ 'व्रिष्णो रराट०' से विष्णु का आवा० ॥ ४ ॥ 'आब्रह्मन्०' से ब्रह्मा का आवा० ॥ ५ ॥ 'स योषा इन्द्र०' से इन्द्र का आवा० ॥ ६ ॥ 'यमाय त्वा०' से यम का आवा० ॥ ७ ॥ 'कार्षिरसि०' से काल का आवा० ॥ ८ ॥ 'चित्रावसो०' से चित्रगुप्त का आवाहन करे ॥ ९ ॥

अथ प्रत्यधिदेवता वामे ॥ ॐ अग्निं दूतं० ॥ अग्नये० अग्निमा० ॥ ॐ आपो हि ष्ठा० अद्भ्यो न० अपः आ० ॥ ॐ

स्योना पृ० पृथिव्यै० पृथिवीं० ॥ ॐ इदं विष्णु० ॥ विष्णवे० विष्णुं० ॥ ॐ इन्द्र ऽआसा० इन्द्राय० इन्द्रं० ॥ ॐ अदित्यै रास्ना० ॥ इन्द्राण्यै० इन्द्राणीं० ॥ ॐ प्रजापते० ॥ ॐ प्रजापतये० प्रजापतिं० ॥ ॐ नमोऽस्तु सर्पेभ्यो० ॥ सर्पेभ्यो० सर्पान्० ॥ ॐ ब्रह्म जज्ञानं० ॥ ब्रह्मणे० ब्रह्माणं० ॥

प्रत्यधि देवताओं का प्रत्येक ग्रहों के वामपार्श्व में आवाहन करे। 'अग्निन्दूतं०' से अग्नि का आवा० ॥ १ ॥ 'आपो हि ष्ठा०' से अप का आवा० ॥ २ ॥ 'स्योना पृथि०' से पृथिवी का आवा० ॥ ३ ॥ 'इदं विष्णु०' से विष्णु का आवा० ॥ ४ ॥ 'इन्द्र आ०' से इन्द्र का आवा० ॥५॥ 'अदित्यै रा०' से इन्द्राणी का आवा० ॥६॥ 'प्रजापते०' से प्रजापति का आवा० ॥ ७ 'नमोऽस्तु सर्पेभ्यो०' से सर्प का आवा० ॥ ८ ॥ ब्रह्म जज्ञानं०' से ब्रह्मा का आवा० ॥ ९ ॥

ततः पञ्चलोकपालान् सूर्योत्तरे ॥ ॐ गणानान्त्वा० ॥ गणपतये० गणपतिं० ॥ ॐ अम्बेऽअम्बिके० ॥ दुर्गायै० दुर्गां० ॥

मू०
२०

ॐ वायो ये ते० ॥ वायवे० वायुं० ॥ ॐ घृतं घृतपावा० ॥ आकाशाय० आकाशं० ॥ ॐ यावाङ्कशा० ॥ अश्विभ्यां० अश्विनौ० ॥ ॐ वास्तोष्पते० ॥ वास्तोष्पतये० वास्तोष्पतिं० ॥ ॐ न हि स्पश० ॥ क्षेत्रपालाय० क्षेत्रपालं० ॥

तब ग्रहों के उत्तर भाग में पंचलोकपालों का आवाहन करै । 'गणाना० त्वा०' से गणेश का आवा० ॥ १ ॥ 'अम्बे अम्बिके०' से दुर्गा का आवा० ॥ २ ॥ 'वायो ये ते०' से वायु का आवा० ॥ ३ ॥ 'घृतं घृतपा०' से आकाश का आवा० ॥४॥ 'यावाङ्कशा०' से अश्विनीकुमारों का आवा० ॥ ५ ॥ 'वास्तोष्पते०' से वास्तोष्पति का आवा० ॥ ६ ॥ 'न हि स्पश०' से क्षेत्रपाल का आवा० ॥ ७ ॥

ततो मण्डलाद्वाह्ये दश दिक्पालानावाहयेत् ॥ ॐ त्रातारमिन्द्र० इन्द्राय इन्द्रं० ॥ ॐ त्वन्नोऽअग्ने तव० ॥ अग्नये० अग्निं० ॥ ॐ यमाय त्वां० यमाय० यमं० ॥ ॐ असुन्वंतम० ॥ निर्ऋतये० निर्ऋतिं० ॥ ॐ तत्त्वा यामि० ॥ वरुणाय० वरुणं० ॥ ॐ आनो०

शा०
२०

नियुद्भि० ॥ वायवे० वायुं० ॥ ॐ वयꣳ सोमं० ॥ कुबेराय० कुबेरं० ॥ ॐ तमीशानं० ॥ ईशानाय० ईशानं० ॥ ॐ अस्मे० रुद्रा० ॥ ब्रह्मणे० ब्रह्माणं० ॥ ॐ स्योना० अनन्ताय० अनन्तं० ॥ अस्यै प्राणा प्रतिष्ठन्तु० ॥ ॐ मनोजूतिर्जु० ॥ ॐ सूर्यादि अनन्तान्ता देवताः सुप्रतिष्ठिता वरदा भवन्तु ॥ सूर्यादि-अनन्तान्तदेवताभ्यो नमः । इति षोडशोपचारैः पूजयेत् ॥ ॐ ग्रहा ऽऊर्ज्जा हुतयो व्यन्तो विप्राय मतिम् ॥ तेषां विशि प्रियाणां वोहमिषमूर्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥

तदनन्तर मण्डल के बाहर दशदिग्पालों का आवाहन करे । यथा 'त्रातारमिन्द्र०' से इन्द्र का आवा० ॥ १ ॥ 'त्वन्नो ऽअग्ने तव०' से अग्नि का आवा० ॥ २ ॥ 'यमाय त्वा०' से यम का आवा० ॥ ३ ॥ 'असुन्वन्त०' से निर्ऋति का आवा० ॥४॥ 'तत्त्वायामि०' से वरुण का आवा० ॥ ५ ॥ 'आ नो नियुद्भिः' से वायु का आवा० ॥ ६ ॥ 'वयꣳ सोम०' से कुबेर का आवा० ॥ ७ ॥ 'तमीशानं०' से

ईशान का आवा० ॥ ८ ॥ 'अस्मे रुद्रा०' से ब्रह्मा का आवा० ॥ ९ ॥ 'स्योना०' से अनन्त का आवा० ॥ १० ॥ 'सूर्यादि अनन्ता०' से प्रतिष्ठा करना। षोडशोपचार से पूजन करै। 'ग्रहा ऊर्जा०' इस मन्त्र से पुष्पाञ्जलि करै।



ग्रहस्येशानदिग्भागे कलशस्थापनविधिना रुद्रकलशं संस्थाप्य कलशे वरुणं असंख्यातरुद्रांश्चावाह्य पूजयेत् ॥ ॐ असंख्याता सहस्राणि ये रुद्रा ऽअधिभूम्याम् ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ असंख्यातरुद्रेभ्यो० असंख्यातरुद्रान्० ॥

ग्रह के ईशान भाग में कलश स्थापन विधि से कलश स्थापन करै। वरुण का असंख्यात रुद्र का आवाहन, पूजन करै। 'असंख्याता०' इस मंत्र से असंख्यात रुद्र का पूजन करै।

अथ कुशकण्डिका ॥ अग्नेर्दक्षिणतो ब्रह्मासनम् ॥ अग्नेरुत्तरतः प्रणीतासनद्वयम् ॥ ब्रह्मासने ब्रह्मोपवेशनम् ॥ यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव ॥ भवामीति प्रतिवचनम्। प्रणीतापात्रं

समाप्यते तावत्त्वं ब्रह्मा भव ॥ भवामीति प्रतिवचनम् । प्रणीतापात्रं

पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य प्रथमासने निधाय ।
ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः द्वितीयासने निदध्यात् ॥

इसके बाद कुशकण्डिका करनी चाहिये । अग्नि के दक्षिण तरफ शुद्ध आसन पर, पूर्वाग्र कुशाओं को बिछाकर 'इस कर्म में आप हमारे ब्रह्मा हों', ऐसे कहे । प्रणीतापात्र को सामने रखकर जल भरै, कुशा से ढँक दे, ब्रह्मा की तरफ देखकर अग्नि के उत्तर तरफ रखे हुए कुश पर रख दे ।

ईशानादिपूर्वाग्रैः कुशैः परिस्तरणम् ॥ आग्नेयादीशानान्तम् ॥
ब्रह्मणोऽग्निपर्यन्तं ॥ नैर्ऋत्याद्वायव्यान्तं ॥ अग्नितः प्रणीतापर्यन्तम् ॥

तदनन्तर परिस्तरण करै । कुश लेकर अग्निकोण से पूर्वाग्र ईशान तक बिछावै, ब्रह्मा से अग्नि तक, नैर्ऋत्य से वायव्य तक, अग्नि से प्रणीता पर्यन्त बिछावे ।

अथ पात्रासादनम् ॥ पश्चादुत्तरतो वा स्यात् पवित्रच्छेदनार्थं कुशात्रयम् ॥ पवित्रार्थं साग्रमनन्तरगर्भं कुशपत्रद्वयम् ॥ प्रोक्षणीपात्रम् । आज्यस्थाली ॥ संमार्जनकुशाः पञ्च ॥ उपयमनकुशाः सप्त ।

समिधस्तिस्त्रः ॥ स्रुवः ॥ आज्यम् ॥ पूर्णपात्रम् ॥ वृषनिष्क्रयम् ॥ उपकल्पनीयानि पदार्थानि निधाय ॥ पवित्रीकरणम् ॥ द्वयोरुपरि त्रीणि निधाय द्वौ मूलेन प्रदक्षिणीकृत्य त्रिभिः छिन्द्य द्वौ ग्राह्यौ त्रिः त्याज्यः ॥ सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां त्रिरुत्पवनम् ॥

तदनन्तर अग्नि के उत्तर या पश्चिम दिशा में पवित्र छेदन के लिये तीन कुशा रखे, उसके पूर्व दो कुशपत्रों को रखे। प्रोक्षणीपात्र, आज्यस्थाली, पाँच सम्मार्जन-कुश, सात उपयमनकुश, तीन समिधा, स्रुव, घी, पूर्णपात्र, बैल का निष्क्रय, और भी हवनीय पदार्थों का आसादन करै। तब पवित्र छेदन करै, दो कुश के पत्र पर तीन कुश रखे, दो के मूल से लपेटना, लपेट कर छेदन करना, दो को लेना, तीन को छोड़ देना। स-पवित्र कर से प्रणीता के जल को तीन बार प्रोक्षणी में छोड़ै। अनामिका-अंगुष्ठ से पवित्र को लेकर, तीन बार प्रोक्षणी जल को उछालै।

प्रोक्षणीं सव्यहस्ते कृत्वा त्रिरुद्दिंगनम् ॥ प्रणीतोदकेन

प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेनासादितवस्तुसेचनम् । अग्निप्रणी-
तयोर्मध्ये प्रोक्षणीं निधाय ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ अधिश्र-
यणम् ॥ ज्वलदुल्मुकेन पर्यग्निकरणम् ॥ इतरथावृत्तिः । स्रुव
प्रतपनम् । सम्मार्जनकुशैः सम्मार्जनम् ॥ अग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं
संमृज्य । प्रणीतोदकेनाभ्युक्ष्य । सम्मार्जनकुशानामग्नौ प्रक्षेपः ॥ पुनः
प्रतप्य दक्षिणदेशे निधाय ।

प्रोक्षणी को बाँये हाथ में लेकर तीन बार ऊपर की तरफ उछालै । प्रणीता के
जल से प्रोक्षणी का प्रोक्षण करै । प्रोक्षणी जल से आसादित वस्तुओं का सेचन करे ।
अग्नि और प्रणीता के बीच में प्रोक्षणी रखे । आज्यस्थाली में घी रखना, घी को
तपाना, जलती हुई लकड़ी को घी के चारो तरफ घुमावै । स्रुव को तपावै, संमार्जन
कुश से सम्मार्जन कर । कुश के अग्रभाग से नीचे मूल से बाहर स्रुव का सम्मार्जन
करै, प्रणीता जल से अभ्युक्षण कर, सम्मार्जन कुशा को अग्नि में छोड़ कर पुनः स्रुव
को तपा कर दक्षिण तरफ रख दे ।

आज्यमग्नेरवतार्य प्रणीतापश्चिमतो निधाय । अनामिकाङ्गुष्ठाभ्यां प्रोक्षणीवदुत्पूय ॥ अवेक्ष्य । पुनः प्रोक्षणीमुत्पूय ॥ आज्यमग्नेः पश्चिमतः निधाय । उपयमनकुशान् वामहस्ते कृत्वा । तिष्ठन् दक्षिणहस्ते समिधोभ्याधाय प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्ताः समिधस्तिस्रः अग्नौ प्रक्षिपेत् ॥

तब घी को अग्नि से उतार कर, प्रणीता के पश्चिम तरफ रखै । अनामिका अङ्गुष्ठ से प्रोक्षणी की तरह घी का भी उत्पवन करै । पुनः घी को अच्छी तरह देख कर, फिर प्रोक्षणी का उत्पवन कर घी को अग्नि के पश्चिम तरफ रखकर, उपयमन कुश को बाँयें हाथ में लेकर खड़े होकर, दक्षिण हाथ में तीनों समिधाओं को घी में डुबा कर, मौन होकर अग्नि में छोड़ दें ।

उपविश्य सपवित्रकरेण प्रोक्षण्युदकेन ईशानादारभ्य ईशानपर्यन्तमग्निं पर्युक्ष्य पवित्रे प्रणोतापात्रे निधाय ॥ दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः स्रुवेणाघारावाज्यभागौ हुत्वा ॥

बैठकर स-पवित्र हाथ से प्रोक्षणी जल को ईशान कोण से प्रारम्भ कर, ईशान कोण तक अग्नि का पर्युक्षण कर, पवित्र को प्रणीता में रखकर, दाहिने पैर को मोड़ अपने आसन से ब्रह्मा पर्यन्त कुशा बिछाकर स्रुव से आघार आज्यभाग का हवन करना।

ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम॥ इति स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः॥ ॐ इन्द्राय स्वाहा॥ इदमिन्द्राय०॥ इत्याघारः॥ ॐ अग्नये स्वाहा॥ इदमग्नये०॥ ॐ सोमाय स्वाहा॥ इदं सोमाय०॥ इत्याज्यभागौ॥ ततोऽनन्वारब्धेन ग्रहाणामष्टाऽष्टसंख्याभिराहुतीः समित्तिलचर्वाज्यद्रव्यैर्जुहुयात्॥ अस्मिन् मूलशान्तिकर्मणि इमानि हवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं न मम॥ यथादैवतमस्तु॥ अथ सूर्यादिग्रहाणां पूर्ववन्मन्त्रेण होमं कुर्यात्॥

'प्रजापतये स्वाहा' से 'सोमाय स्वाहा' पर्यन्त आहुति करके स्रुव में शेष घी का

मू०
२४

त्याग 'नमम' पढ़कर प्रोक्षणी में छोड़ै। तब अन्वारब्ध (याने ब्रह्मापर्यन्त जो कुश है) को हटाकर प्रत्येक ग्रहों की समिधा, तिल, चरु, आज्य से ८ या २८ आहुति करे। हाथ में जल लेकर 'अस्मिन् मूल०' इससे जल छोड़ै। सूर्यादिग्रहों का पहिले लिखे हुए मन्त्रों से होम करना।

अथ प्रधानहोमः। अष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिमष्टौ वा जुहुयात् ॥ अथ मूलनक्षत्रमन्त्रहोमः ॥ ॐ असुन्वन्तयजमानमिच्छ स्तेन स्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ स्वाहा १०८ ॥ ततोऽधिदेवता इन्द्रस्तन्मंत्रः ॥ ॐ स योषाऽइन्द्र स गणो मरुद्भिः पिब वृत्रहा शूर व्विद्वान् ॥ जहि शत्रूँ२रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः स्वाहा ॥ १०८ ॥ अथ प्रत्यधिदेवता अपमंत्रः ॥ ॐ आपो हिष्ठा मयो भुवस्ता न ऽऊर्ज्जे दधातन ॥ महे रणाय चक्षसे स्वाहा ॥ १०८ ॥

इसी तरह प्रधान होम १००८, या १०८, या २८, या ८ आहुति से करना चाहिये। यथा मूलनक्षत्र मंत्र—'असुन्वन्त०' यह है। तब अधिदेव मन्त्र 'स योषाऽइ०'। प्रत्यधिमन्त्र—'आपो हिष्ठा०'। २४ दल में आवाहित देवों को २८ (या ८) आहुति प्रत्येक को देवे। इसका क्रम पद्धति के मूल में दिया है।

ततश्चतुर्विंशद्देवानां प्रत्येकमष्टाविंशति अष्टसंख्यया वा तत्तद्द्रव्यैर्जुहुयात्॥ तद्यथा॥ ॐ विश्वेभ्यो देवेभ्यः स्वाहा॥ इदं विश्वेभ्यो देवेभ्यो न मम ॥ १ ॥ ॐ विष्णवे स्वाहा ॥ इदं विष्णवे० ॥ २ ॥ ॐ अष्टवसुभ्यः स्वाहा ॥ इदं अष्टवसुभ्यो न मम ॥ ३ ॥ ॐ वरुणाय स्वाहा ॥ इदं वरुणाय० ॥ ४ ॥ ॐ अजैकपदे स्वाहा ॥ इदं अजैकपदे० ॥ ५ ॥ ॐ अहिर्बुध्न्याय स्वाहा ॥ इदं अहिर्बुध्न्याय० ॥ ६ ॥ ॐ पूष्णे स्वाहा ॥ इदं पूष्णे न मम ॥ ७ ॥ ॐ अश्विभ्यां स्वाहा ॥ इदमश्विभ्यां० ॥ ८ ॥ ॐ यमाय स्वाहा ॥ इदं यमाय० ॥ ९ ॥ ॐ अग्नये स्वाहा। इदमग्नये० ॥ १० ॥ ॐ प्रजापतये

स्वाहा । इदं प्रजापतये न० ॥ ११ ॥ ॐ सोमाय स्वाहा ॥ इदं सोमाय० ॥ १२ ॥ ॐ रुद्राय स्वाहा ॥ इदं रुद्राय० ॥ १३ ॥ ॐ अदितये स्वाहा । इदमदितये० ॥ १४ ॥ ॐ बृहस्पतये स्वाहा ॥ इदं बृहस्पतये० ॥१५॥ ॐ सर्पेभ्यः स्वाहा ॥ इदं सर्पेभ्यो० ॥१६॥ ॐ पितृभ्यः स्वाहा । इदं पितृभ्यो० ॥ १७ ॥ ॐ भगाय स्वाहा । इदं भगाय० ॥ १८ ॥ ॐ अर्य्यम्णे स्वाहा ॥ इदमर्य्यम्णे० ॥ १९ ॥ ॐ सवित्रे स्वाहा ॥ इदं सवित्रे० ॥ २० ॥ ॐ विश्वकर्मणे स्वाहा ॥ इदं विश्वकर्मणे० ॥ २१ ॥ ॐ वायवे स्वाहा । इदं वायवे० ॥२२॥ ॐ इन्द्राग्नीभ्यां स्वाहा । इदमिन्द्राग्नीभ्यां नमम ॥ २३ ॥ ॐ मित्राय स्वाहा ॥ इदं मित्राय० ॥ २४ ॥ ॐ इन्द्राय स्वाहा ॥ इदमिन्द्राय० ॥ १ ॥ ॐ अग्नये स्वाहा । इदमग्नये० ॥ २ ॥ ॐ यमाय स्वाहा । इदं यमाय० ॥ ३ ॥ ॐ निर्ऋतये स्वाहा ॥ इदं



२५

निर्ऋतये० ॥ ४ ॥ ॐ वरुणाय स्वाहा । इदं वरुणाय० ॥ ५ ॥ ॐ वायवे स्वाहा । इदं वायवे० ॥ ६ ॥ ॐ सोमाय स्वाहा ॥ इदं सोमाय० ॥ ७ ॥ ॐ ईशानाय स्वाहा । इदं ईशानाय० ॥ ८ ॥ ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० ॥ ९ ॥ ॐ अनन्ताय स्वाहा । इदं अनन्ताय० ॥ १० ॥ इति मूलनक्षत्रप्रधानदेवताहोमः ॥ ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् स्वाहा ॥ १०८ आहुतयः ॥ अथ स्विष्टकृदादिहोमः ॥ ॐ अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देवव्वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेम ॥ ॐ स्वाहा स्वधायुताग्नये वैश्वानराय नमः, इति मन्त्रेणाग्निं सम्पूज्य ॥ हुतशेषद्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् ॥ ॐ अग्नये स्विष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते न मम ॥ ततो भूरा-

दिनवाहुतयः आज्येन ॥ ॐ भूः स्वाहा । इदमग्नये० ॥ ॐ भुवः स्वाहा । इदं वायवे० ॥ ॐ स्वः स्वाहा । इदं सूर्याय० ॥ ॐ त्वन्नो-ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नि-तमः शोशुचानो व्विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नी-वरुणाभ्यां न मम ॥ ॐ स त्वन्नो ऽअग्ने वमो भवोती नेदिष्ठो-ऽअस्या ऽउषसो व्युष्टौ अवयक्ष्व नो वरुणᳪ रराणो व्वीहि मृडीकᳪ सुहवो नऽएधि स्वाहा इदमग्नीवरुणाभ्यां न मम ॥ ॐ अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्वमित्व मया ऽअसि ॥ अयानो यज्ञं वहास्य-यानो धेहि भेषजᳪ स्वाहा ॥ इदमग्नये अयसे न मम ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्न्नो ऽअद्य सवितोत विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यश्च न

वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न

मम ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमᳪ श्रथाय ॥ अथा वयमादित्यव्रते तवानागसो ऽअदितये स्याम स्वाहा ॥ इदं वरुणायादित्यायाऽदितये न मम ॥ ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये न मम ॥ ततो हुतशेषं प्रोक्षणीपात्रे प्रक्षिपेत् ॥

इसके बाद भूरादि नव आहुति घी से करना। ततः स्रुव का बचा हुआ घी प्रोक्षणीपात्र में छोड़ै।

अथ बलिदानम् ॥ ॐ प्राच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा-वाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान् सदीपमाषभ-क्तबलीन् समर्पयामि ॥ भो भो इन्द्रादिदशदिक्पालाः स्वां स्वां दिशं

रक्षत बलिं भक्षत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः शान्तिकर्तारः पुष्टिकर्तारस्तुष्टिकर्तारो वरदा भवत ॥ अनेन बलिदानेन इन्द्रादिदशदिक्पालाः प्रीयन्ताम् ॥ ॐ ग्रहा ऽऊर्ज्जा हुतयो व्यन्तो विप्राय मतिम् ॥ तेषां विशि प्रियाणां व्वोहमिषमूर्ज्ज समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ सूर्यादिग्रहेभ्यः अधिदेवता-प्रत्यधिदेवता-पञ्चलोकपाल-वास्तोष्पतिसहितेभ्यः एता० मम सकुटुम्बस्य० आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत ॥ अनेन बलिदानेन सूर्यादिग्रहाः प्रीयन्ताम् ॥

तदनन्तर दश दिक्पाल बलिदान 'प्राच्यै दिशे०' इस मन्त्र से करै। 'ग्रहा ऊर्ज्जा०' इस मन्त्र से ग्रह का बलिदान करै।



अथ क्षेत्रपालबलिः ॥ एकस्मिन् वंशादिपात्रे कुशानास्तीर्य

तदुपरि आहारश्चतुर्गुणं द्विगुणं वा माषभक्तदध्योदनं वा जलपात्रं च निधाय चतुर्मुखं दीपं प्रज्वाल्य हरिद्राकुङ्कुमादिपताकायुतं कृत्वा ॥ असुन्वं० क्षेत्रपालाय नमः, इति सम्पूज्य प्रार्थयेत् ॥ नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैः सह ॥ पूजाबलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ आरोग्यं देहि मे देव ! निर्विघ्नं कुरु सर्वदा ॥ क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय मारीगणभैरवराक्षसकूष्माण्डवेतालभूत-प्रेत–पिशाचशाकिनी-डाकिनी–पिशाचिनीगणसहिताय एतं सदीपमाषभक्तबलिं समर्पयामि ॥ क्षेत्रपाल ! क्षेत्रं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव ॥ अनेन बलिदानेन क्षेत्रपालः प्रीयतां न मम ।

अथ क्षेत्रपालबलिदानम् । एक बाँस की डलिया में कुशा बिछाकर, उस पर

मनुष्य के भोजन का चतुर्गुण अथवा द्विगुण उड़द का भात अथवा दही भात और जलपान रखकर चौमुखा दीपक जलाकर, हरिद्रा कुङ्कुम पताका ( झण्डी ) से सुशोभित कर 'असुन्वंत० क्षेत्रपालाय नमः' इस मन्त्र से क्षेत्रपाल का पूजनकर, 'नमो वै०' इससे प्रार्थना करे। हाथ में जल लेकर, 'क्षेत्रपालाय०' इस वाक्य से जल छोड़ै। हाथ जोड़ प्रार्थना करै 'भो क्षेत्रपालाय०' से पुनः जल लेकर 'अनेन०' इस वाक्य से जल अर्पण करै।

शूद्रो बलिं गृहीत्वा पत्नीबालकसहितयजमानस्योपरि सकृद्भ्रामयित्वा चतुष्पथे निःक्षिपेत् ॥ ततो यजमानः पृष्ठतो द्वारपर्यन्तं गत्वा हिङ्कारेणेति मन्त्रेण जलं क्षिपेत् ॥ मन्त्रः ॥ ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा वक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा

प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहाऽयनाय स्वाहा प्रायणाय स्वाहा ॥

शूद्र बलि उठाकर सपत्नीक यजमान तथा बालक के ऊपर एक बार घुमाकर चौराहेपर रख दे। 'हिङ्काराय स्वाहा०' इस मन्त्र से बलि ले जाने वाले के पीछे द्वार तक जाकर यजमान जल फेंक दे।

यजमानः पाणिपादं प्रक्षाल्याऽऽचम्य ॥ नारिकेलादिफलं रक्त-वस्त्रवेष्टितं द्वादश-षट्चतुःस्रुवेण गृहीतमाज्यं स्रुच्यां कृत्वा ॥ ॐ पूर्णाहुत्यै नमः इति सम्पूज्य ॥ पूर्णाहुतिं जुहुयात् ॥ ॐ मूर्द्धानं दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआजातमग्निम् ॥ कविꣳ सम्म्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणा वहा ऽइषमूर्जꣳ शतक्रतो स्वाहा ॥ इदमग्नये वैश्वानराय न मम ॥

यजमान हाथ पैर धोकर आचमन कर प्राणायाम करे। 'अपवित्रः०' इस वाक्य

से अपने ऊपर जल छिड़कै। तदनन्तर नारियल में लाल कपड़ा लपेटकर स्रुव में घी भरकर, स्रुची में ( १२ या ६ या ४ ) स्रुवा घी छोड़कर स्रुची के ऊपर नारियल रख 'पूर्णाहुत्यै नमः' इस वाक्य से पूजनकर, 'मूर्द्धानं०' इत्यादि मन्त्रों से पूर्णाहुति करै।

ततो वसोर्द्धारां जुहुयात् ॥ ॐ एका च मे ॥ वसोः पवित्रमिति वा ॥ ॐ वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥ इदमग्नये० ॥ स्रुवेण भस्म आनीय ॥ ॐ त्र्यायुषं जगदग्नेः इति ललाटे ॥ ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् ॥ ॐ यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले ॥ ॐ तन्नोऽअस्तु त्र्यायुषम् इति हृदि ॥ संस्रवप्राशनम् ॥ आचमनम् ॥ पवित्राभ्यां मार्जनम् ॥ ॐ सुमित्रिया न ऽआप ऽओषधयः सन्तु इति ॥ अग्नौ पवित्रप्रतिपत्तिः ॥

'एका च मे० वसोः पवि०' इस मन्त्र से वसोर्द्धारा करै। तदनन्तर स्रुव में भस्म लेकर, 'त्र्यायुषं०' इस मन्त्र से ललाट में, ग्रीवा में, दक्षिण बाहुमूल में, हृदय में, भस्म लगावै। फिर प्रोक्षणी के घृत का यजमान प्राशन करै। आचमन करै। 'सुमित्रिया न०' इस मन्त्र से प्रणीता के जल को पवित्री से मार्जन करै। पवित्री को अग्नि में छोड़ दे।

ब्रह्मणे पूर्णपात्रदानम् ॥ कृतैतन्मूलजननशान्तिहवनकर्मणः कृताऽकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थं इदं पूर्णपात्रं सदक्षिणाकं प्रजापतिदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ अथाऽभिषेकः ॥ प्रधानकुम्भस्थं जलमानीय ब्राह्मणाः पत्नीबालकसहितयजमानस्योपरि अभिषिञ्चेयुः ॥ तत्र मन्त्राः ॥ ॐ देवस्य त्वा० सरस्वत्यै० ऽभिषिञ्चाम्यसौ ॥ १ ॥ ॐ देवस्य त्वा० सरस्वत्यै० ऽभिषिञ्चामि ॥ २ ॥ ॐ देवस्य त्वा० अश्विनोर्भै० ऽभिषिञ्चामि ॥ ३ ॥ योऽसौ वज्रधरो

देवो महेन्द्रो गजवाहनः॥ मूलजातशिशोर्दोषं मातृपित्रोर्व्यपोहतु॥१॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः॥ सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु॥२॥ योऽसौ दण्डधरो देवो धर्मो महिषवाहनः॥
मूलजातशिशोर्दोषं व्यपोहतु यमो मम॥३॥ योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः॥ प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम्॥४॥ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः॥ नक्रवाहः प्रचेता वो मूलदोषं व्यपोहतु॥५॥ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः॥ प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः॥६॥
योऽसौ निधिपतिर्देवो खड्गभृद्वाजिवाहनः॥ मातृपित्रोः शिशोश्चैव मूलदोषं व्यपोहतु॥७॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः॥
आश्लेषामूलगण्डान्तं दोषमाशु व्यपोहतु॥८॥ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः॥ मूलदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः॥९॥

मूलर्क्षे जातबालस्य मातृपित्रोर्धनस्य च ॥ भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ १० ॥ योऽसौ वागीश्वरो नाम ह्यधिदेवो बृहस्पतिः ॥ मातृपित्रोः शिशोश्चैव गण्डान्तं स व्यपोहतु ॥ ११ ॥ पितरः सर्वभूतानां रक्षन्तु पितरः सदा ॥ सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबान्धवान् ॥ १२ ॥ एवं ज्येष्ठादिशान्तौ सर्वत्र श्लोकेषु ऊहः कार्यः ॥ इति विशेषः ॥ ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शान्तिः कान्तिः तुष्टिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदि-

त्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गनाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ ९ ॥ इति मन्त्रेणाभिषिञ्चेत् ॥ ततः शिरो मे श्रीर्यश इति स्वाङ्गानि स्पृशेत् ॥ मन्त्रः ॥ ॐ शिरो मे श्रीर्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि ॥ राजा मे प्राणो ऽअमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ १ ॥ जिह्वा मे भद्रं वाङ्महोमनोमन्यु ऽस्वराड्भामः मोदाः प्रमोदा ऽअङ्गुलीरङ्गानि मित्रं मे सहः ॥ २ ॥ बाहू मे बलिमिन्द्रियꣳ हस्तौ मे कर्म्म वीर्य्यम् ॥ आत्क्मा क्षत्रमुरो मम ॥ ३ ॥

पृष्ठीर्म्मे राष्ट्रमुदरम॑ꣳसौग्रीवाश्च श्रोणी ॥ ऊरू ऽअरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ ४ ॥ नाभिर्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः ॥ जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ॥

'कृतैतत् मूल०' इस संकल्प वाक्य से ब्रह्मा को पूर्णपात्र दान करै। इसके बाद प्रधान कलश के जल को लेकर सपत्नीक यजमान और बालक के ऊपर अभिषेक करै। 'देवस्य त्वा०' 'योऽसौ वज्रधरो०' 'सुरास्त्वा०' इत्यादि मन्त्रों से अभिषेक करे।

ततः घृतपूरितकांस्यपात्रे बालकस्य मुखावलोकनम्। तत्र मन्त्रः ॥ ॐ रूपेण वो रूपमभ्यागान्तुथो वो विश्ववेदा विभजतु ॥ ऋतस्य पथा प्रेतचन्द्र दक्षिणाविस्वः पश्य व्यन्तरिक्षं व्यत्तस्वसदस्यैः ॥ ततः कृतस्य मुखावलोकनकर्मणः साङ्गतासिद्धयर्थं इदं घृतपूर्णकांस्यपात्रं सहिरण्यं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे ॥

त्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गनाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ ९ ॥ इति मन्त्रेणाभिषिञ्चेत् ॥ ततः शिरो मे श्रीर्यश इति स्वाङ्गानि स्पृशेत् ॥ मन्त्रः ॥ ॐ शिरो मे श्रीर्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि ॥ राजा मे प्राणो ऽअमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ १ ॥ जिह्वा मे भद्रं वाङ्महोमनोमन्यु ऽस्वराड्भामः मोदाः प्रमोदा ऽअङ्गुलीरङ्गानि मित्रं मे सहः ॥ २ ॥ बाहू मे बलिमिन्द्रियꣳ हस्तौ मे कर्म्म वीर्य्यम् ॥ आत्मा क्षत्रमुरो मम ॥ ३ ॥

पृष्टीर्म्मे राष्ट्रमुदरमꣳ सौग्रीवाश्च श्रोणी ॥ ऊरू ऽअरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ ४ ॥ नाभिर्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः ॥ जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि व्विशि राजा प्रतिष्ठितः ॥

'कृतैतत् मूल०' इस संकल्प वाक्य से ब्रह्मा को पूर्णपात्र दान करै । इसके बाद प्रधान कलश के जल को लेकर सपत्नीक यजमान और बालक के ऊपर अभिषेक करै । 'देवस्य त्वा०' 'योऽसौ वज्रधरो०' 'सुरास्त्वा०' इत्यादि मन्त्रों से अभिषेक करे ।

ततः घृतपूरितकांस्यपात्रे बालकस्य मुखावलोकनम् । तत्र मन्त्रः ॥ ॐ रूपेण वो रूपमभ्यागान्तुथो वो विश्ववेदा व्विभजतु ॥ ऋतस्य पथा प्रेतचन्द्र दक्षिणाविस्वः पश्य व्व्यन्तरिक्षं व्यत्तस्वसदस्यैः ॥ ततः कृतस्य मुखावलोकनकर्मणः साङ्गतासिद्ध्यर्थं इदं घृतपूर्णकांस्यपात्रं सहिरण्यं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे ॥

इति दद्यात् ॥

कांसे के पात्र में घी भरकर पिता बालक का मुख देखै, 'रूपेण वो०' इस मन्त्र से। तदनन्तर यजमान हाथ में जल लेकर, 'कृतस्य मुखा०' इस वाक्य से घृतपात्र संकल्पकर ब्राह्मण को दे।

ततो आचार्याय गां दत्त्वा ॥ कृतस्य मूलजननशान्तिकर्मणः साङ्गतासिध्यर्थं इदं गोनिष्क्रयभूतं द्रव्यं रजतं चन्द्रदैवतममुकगोत्रायाऽऽचार्याय तुभ्यमहं सम्प्रददे ॥ स्वस्ति कृतस्य० ।जननशां० साङ्ग० यथासंख्याकान् ब्राह्मणान् भोजयिष्ये ॥ ततो आवाहितदेवानामुत्तरपूजां कुर्यात् ॥ आवाहितदेवताभ्यो नमः इति मन्त्रेण ॥ ततो आचार्याय प्रधानपीठं दद्यात् ॥ कृ० मूलजननशां० इदं ग्रहपीठं मातृकापीठं प्रधानपीठं सदक्षिणाकं आचार्याय तुभ्यमहं सम्प्रददे ॥ कृ० शां० तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां विभज्य दातुमहमुत्सृजे ॥

इस के बाद गोदान कर के आचार्य को गौ दे। 'कृतस्य०' इस वाक्य से ब्राह्मण भोजन का संकल्प कर, 'आवाहितदेवताभ्यो नमः' इस वाक्य से आवाहित देवताओं की उत्तरपूजा करै। प्रधानपीठादि का दान कर आचार्य को दे। भूयसी दक्षिणा का सङ्कल्प करै।

अथ विसर्जनम् ॥ ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे ॥ उप प्प्रयन्तु मरुतः सुदानव ऽइन्द्रप्राशूर्भवासचा ॥ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ॥ एष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तज्जुषस्व स्वाहा ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ! ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेत्ताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या

५

तपोयज्ञक्रियादिषु ॥ न्यूनं सम्पूर्णतां यातु सद्यो वन्दे तमच्युतम् ॥ ॐ विष्णवे नमः ॥ विष्णवे नमः ॥ विष्णवे नमः ॥ इति मूल-नक्षत्रजननशान्तिः ।

'उत्तिष्ठ ब्रह्मण०' 'यान्तु देव०' इस मन्त्र से आवाहित देवों का विसर्जन कर, 'यज्ञ यज्ञं० गच्छ गच्छ०' इस मन्त्र से अग्नि का विसर्जन करै । पुनः 'प्रमादात्०' इस मंत्र का पाठ करै । इति ।

एवं श्लेषादिशान्तिमपि कुर्यात् ॥ तद्यथा ॥ अथाश्लेषानक्षत्र-देवताः ॥ ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ ॐ भू० सर्पेभ्यो० सर्पाना० ॥ १ ॥ इति प्रधानम् ॥ ततोऽधिदेवता पुष्यस्तन्मन्त्रः ॥ ॐ बृहस्पते ऽअतियदर्यो ऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋत-प्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ॐ भू० बृहस्पतये० बृह-

स्पतिमा० ॥ २ ॥ ततः प्रत्यधिदेवता मघा तन्मंत्रः ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पितरोऽमी मदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ॥ ॐ भू० पितृभ्यो० पितॄना० ॥ ३ ॥ अथ चतुर्विंशतिदलेषु चतुर्विंशतिदेवानावाहयेत् ॥ ॐ भू० भगाय० भगं० ॥ १ ॥ ॐ भू० अर्यम्णे० अर्यमाणं० ॥२॥ ॐ भू० सवित्रे० सवितारं० ॥ ३ ॥ ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥ ४ ॥ ॐ भू० वायवे० वायुं० ॥ ५ ॥ ॐ भू० इन्द्राग्नीभ्यां० इन्द्राग्न्योः० ॥ ६ ॥ ॐ भू० मित्राय० मित्रं० ॥ ७ ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ ८ ॥ ॐ भू० निर्ऋतये० निर्ऋतिमा० ॥ ९ ॥ ॐ भू० अद्भयो० अपः ॥ १० ॥ ॐ भू० विश्वेभ्यो देवेभ्यो० विश्वान्देवाना० ॥११॥ ॐ भू० विष्णवे० विष्णुं० ॥१२॥

ॐ भू० अष्टवसुभ्यो० अष्टवसू० ॥ १३ ॥ ॐ भू० वरुणाय० वरुणं० ॥ १४ ॥ ॐ भू० अजैकपदे० अजैकपादं० ॥ १५ ॥ ॐ भू० अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ १६ ॥ ॐ भू० पूष्णे० पूषाणं० ॥ १७ ॥ ॐ भू० अश्विभ्यां० अश्विनौ० ॥१८॥ ॐ भू० यमाय० यमं० ॥ १९ ॥ ॐ भू० अग्नये० अग्निमा० ॥ २० ॥ ॐ भू० प्रजापतये० प्रजापतिं० ॥ २१ ॥ ॐ भू० सोमाय० सोमं० ॥२२॥ ॐ भू० रुद्राय० रुद्रं० ॥२३॥ ॐ भू० अदितये० अदितिं० ॥२४॥ मण्डलाद्बाह्ये॥ ॐ भू० इन्द्राय० इन्द्रं० ॥१॥ ॐ भू० अग्नये० अग्निं० ॥२॥ ॐ भू०यमाय० यमं० ॥३॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥४॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू० वायवे० वायुं० ॥ ६ ॥ ॐ भू० सोमाय० सोमं० ॥ ७ ॥ ॐ भू० ईशानाय० ईशानं० ॥ ८ ॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ॐ भू० अनन्ताय०

अनन्तं० ॥ १० ॥ इति श्लेषानक्षत्रजननशान्तिप्रयोगः ॥ ११ ॥

आश्लेषा मन्त्र-'नमोस्तु सर्पेभ्यो०'। अधिमन्त्र-'बृहस्पते०' । प्रत्यधि मन्त्र-'पितृभ्यः०' ।

आगे आश्लेषा में २४ नक्षत्र देवता क्रम इस प्रकार है—'भगाय स्वाहा' यहाँ से प्रारंभ कर 'भू० ब्रह्मणे०' यहाँ तक होम करै। ओंकार सहित मंत्रों से हवन करै।

अथ मघानक्षत्रदेवताः ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः ॥ पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्न्पितरोमी मदन्त पितरोती तृपन्त पितरः शुन्धध्वम् ॥ ॐ भू० पितृभ्यो० पितृना० ॥ १ ॥ ततोऽधिदेवता आश्लेषा ॥ तन्मन्त्रः ॥ ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । ॐ भू० सर्पेभ्यो० सर्पाना० ॥ २ ॥ ततः प्रत्यधिदेवता पूर्वाफाल्गुनी ॥

तन्मंत्रः ॥ भगप्रणेतर्भग-सत्यराधो भगेमां धियमुदवा ददन्नः ॥ भग प्र नो जनय गोभिरश्वैर्भग प्र नृभिर्न्नृवन्तः स्याम ॥ ॐ भू० भगाय० भगमा० ॥ ३ ॥ ततश्चतुर्विंशतिदलेषु चतुर्विंशतिदेवानावाहयेत् ॥ ॐ भू० अर्यम्णे० अर्यमाणं० ॥ १ ॥ ॐ भू० सवित्रे० सवितारं० ॥ २ ॥ ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥ ३ ॥ ॐ भू० वायवे० वायुं० ॥ ४ ॥ ॐ भू० इन्द्राग्नीभ्यां० इन्द्राग्न्योः० ॥ ५ ॥ ॐ भू० मित्राय० मित्रं० ॥ ६ ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ ७ ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ८ ॥ ॐ भू० अद्भ्यो० अपः० ॥ ९ ॥ ॐ भू० विश्वेभ्यो देवेभ्यो० विश्वान्देवाना० ॥ १० ॥ ॐ भू० विष्णवे० विष्णुं० ॥ ११ ॥ ॐ भू० अष्टवसुभ्यो० अष्टवसूना० ॥ १२ ॥ ॐ भू० वरुणाय० वरुणमा० ॥ १३ ॥ ॐ अजैकपदे० अजैकपादं० ॥ १४ ॥ ॐ भू० अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ १५ ॥

ॐ भू० पूष्णे० पूषाणं० ॥ १६ ॥ ॐ भू० अश्विभ्यां० अश्विनौ० ॥ १७ ॥ ॐ भू० यमाय० यमं० ॥ १८ ॥ ॐ भू० अग्नये० अग्निं० ॥ १९ ॥ ॐ भू० प्रजापतये० प्रजापतिं० ॥ २० ॥ ॐ भू० सोमाय० सोमं० ॥ २१ ॥ ॐ भू० रुद्राय० रुद्रं० ॥ २२ ॥ ॐ भू० अदितये० अदितिमा० ॥ २३ ॥ ॐ भू० बृहस्पतये० बृहस्पतिं० ॥ २४ ॥

ततो मण्डलाद्बाह्ये दश दिक्पालाना० । ॐ भू० इन्द्राय० इन्द्रं० ॥ १ ॥ ॐ भू० अग्नये० अग्निं० ॥ २ ॥ ॐ भू० यमाय० यमं० ॥ ३ ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू० वायवे० वायुं० ॥ ६ ॥ ॐ भू० सोमाय० सोमं० ॥ ७ ॥ ॐ भू० ईशानाय० ईशानं० ॥ ८ ॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ॐ भू० अनन्ताय० अनन्तं० ॥ १० ॥

इति मघाजननशांतिः ॥

मघा नक्षत्र मन्त्र-'पितृभ्यः०'। अधिमन्त्र-'नमोऽस्तु सर्पेभ्यो०'। प्रत्यधि मन्त्र-'भगप्रणेत०'। मघा नक्षत्र में 'अर्यमण इत्यारभ्य भगान्तं' पूजन में तथा होम में योजना करनी चाहिये।



अथ ज्येष्ठानक्षत्रदेवताः ॥ ॐ इन्द्र ऽआसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर ऽएतु सोमः ॥ देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ १ ॥ अथाधिदेवता अनुराधा ॥ तन्मन्त्रः ॥ ॐ मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि द्युम्नं चित्रश्रवस्तमम् ॥ भू० मित्राय० मित्रं० ॥ २ ॥ ततः प्रत्यधिदेवता निर्ऋतिः ॥ तन्मन्त्रः ॥ ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ३ ॥ ततश्चतुर्विंशतिदलेषु चतुर्विंशतिदेवानावाहयेत् ॥ ॐ भू० अद्भ्यो०

अपः० ॥ १ ॥ ॐ भू० विश्वेभ्यो० देवेभ्यो० विश्वान्देवानावा०
॥ २ ॥ ॐ भू० विष्णवे० विष्णुं० ॥ ३ ॥ ॐ भू० अष्टवसुभ्यो०
अष्टवसूना० ॥ ४ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू०
अजैकपदे० अजैकपादं० ॥ ६ ॥ ॐ भू० अहिर्बुध्न्याय० अहि-
र्बुध्न्यं० ॥ ७ ॥ ॐ भू० पूष्णे० पूषाणं० ॥ ८ ॥ ॐ भू० अश्वि-
भ्यां० अश्विनौ० ॥ ९ ॥ ॐ भू० यमाय० यमं० ॥ १० ॥ ॐ
भू० अग्नये० अग्निं० ॥११॥ ॐ भू० प्रजापतये० प्रजापतिं० ॥१२॥
ॐ भू० सोमाय० सोमं० ॥ १३ ॥ ॐ भू० रुद्राय० रुद्रं० ॥१४॥
ॐ भू० अदितये० अदितिं० ॥ १५ ॥ ॐ भू० बृहस्पतये० बृह-
स्पतिं० ॥ १६ ॥ ॐ भू० सर्पेभ्यो० सर्पाना० ॥ १७ ॥ ॐ भू०
पितृभ्यो० पितृना० ॥ १८ ॥ ॐ भू० भगाय० भगमा० ॥ १९ ॥
ॐ भू० अर्यम्णे० अर्यमाणं० ॥२०॥ ॐ भू० सवित्रे० सवितारं० ॥२१॥

ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥२२॥ ॐ भू० वायवे० वायुं० ॥२३॥ ॐ भू० इन्द्राग्नीभ्यां० इन्द्राग्न्योः० ॥ २४॥ ततो मंडलाद्वाह्ये दशदिक्पालानावाहयेत् ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ १ ॥ ॐ भू० अग्नये० अग्निं० ॥ २ ॥ ॐ भू० यमाय० यमं० ॥ ३ ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू० वायवे० वायुं० ॥ ६ ॥ ॐ भू० सोमाय० सोमं० ॥ ७ ॥ ॐ भू० ईशानाय० ईशानं० ॥८॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥९॥ ॐ भू० अनन्ताय० अनन्तं० ॥ १० ॥ इति ज्येष्ठाजननशान्तिः ॥

ज्येष्ठा नक्षत्रमन्त्र-'इन्द्र ऽआसां नेता०'। अधिमन्त्र-'मित्रस्य च०'। प्रत्यधि मन्त्र-'असुन्वन्तम०'। जेष्ठा नक्षत्र में 'ॐ भू अङ्कयो०' यहाँ से 'इन्द्राग्नीभ्यां०' तक होम करे।

अथ रेवतीनक्षत्रदेवताः ॥ ॐ पूषन्तव व्रते वयं न रिष्येम

कदाचन ॥ स्तोस्तारस्त इह स्मसि ॥ भू० पूष्णे० पूषाणं० ॥ १ ॥
अथाधिदेवता उत्तराभाद्रपदस्तत्र मंत्रः ॥ ॐ शिवो नामासि स्वधि-
तिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्यायुषेऽन्ना-
द्याय प्रजननाय रायस्पोषाय सुप्प्रजास्त्वाय सुवीर्याय ॥ ॐ भू०
अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ २ ॥ अथ प्रत्यधिदेवता अश्विनी तत्र
मंत्रः ॥ ॐ या वां कशा मधुमत्यश्विना सुनृतावती ॥ तया यज्ञं
मिमिक्षतम् ॥ ॐ भू० अश्विभ्यां० अश्विनौ० ॥ ३ ॥ ततश्चतुर्विंश-
तिदलेषु चतुर्विंशतिदेवानावाहयेत् ॥ ॐ भू० यमाय० यमं० ॥ १ ॥
ॐ भू० अग्नये० अग्निं० ॥ २ ॥ ॐ भू० प्रजापतये० प्रजापतिं०
॥ ३ ॥ ॐ भू० सोमाय० सोमं० ॥ ४ ॥ ॐ भू० रुद्राय० रुद्रं०
॥ ५ ॥ ॐ भू० अदितये० अदितिं० ॥ ६ ॥ ॐ भू० बृहस्पतये०
बृहस्पतिं० ॥ ७ ॥ ॐ भू० सर्पेभ्यो० सर्पाना० ॥ ८ ॥ ॐ भू०

पितृभ्यो पितॄना० ॥ ९ ॥ ॐ भू० भगाय० भगं० ॥१०॥ ॐ भू० अर्यम्णे० अर्यमाणं० ॥११॥ ॐ भू० सवित्रे० सवितारं० ॥ १२ ॥ ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥१३॥ ॐ भू० वायवे० वायुं० ॥१४॥ ॐ भू० इन्द्राग्नीभ्यां० इन्द्राग्न्यो० ॥१५॥ ॐ भू० मित्राय० मित्रं० ॥१६॥ ॐ भू० इन्द्राय० इन्द्रं० ॥१७॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥१८॥ ॐ भू० अद्भ्यो० अपः० ॥१९॥ ॐ भू० विश्वेभ्यो० देवेभ्यो० विश्वान्देवाना० ॥२०॥ ॐ भू० विष्णवे० विष्णुं० ॥२१॥ ॐ भू० अष्टवसुभ्यो० अष्टवसूना० ॥ २२ ॥ ॐ भू० वरुणाय० वरुणं० ॥ २३ ॥ ॐ भू० अजैकपदे० अजैकपदं० ॥ २४ ॥ अथ मण्डलाद्बाह्ये दशदिक्पालानावाहयेत्॥ ॐ भू० इन्द्राय० इन्द्रं० ॥ १ ॥ ॐ भू० अग्नये० अग्निं० ॥ २ ॥ ॐ भू० यमाय० यमं० ॥ ३ ॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ भू० वरुणाय वरुणं०

॥५॥ ॐ भू० वायवे० वायुं० ॥६॥ ॐ भू० सोमाय० सोमं० ॥७॥ ॐ भू० ईशानाय० ईशानं० ॥ ८ ॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥ ॐ भू० अनन्ताय० अनन्तं० ॥ १० ॥ इति रेवतीजननशान्तिः ॥

रेवती नक्षत्र मन्त्र-'पूषन्तव व्रते०'। अधिमन्त्र-शिवो नामासि०'। प्रत्यधि मन्त्र-'यावाङ्कशा०'। रेवती में 'भू० यमाय०' यहाँ से 'अजैकपद०' तक होम करे।

अथाऽश्विनीनक्षत्रदेवताः ॥ तन्मन्त्रः ॥ ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वती व्वीर्यम् । व्वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥ ॐ भू० अश्विभ्यां० अश्विनौ० ॥ १ ॥ अथाऽधिदेवता रेवती तत्र मन्त्रः ॥ ॐ पूषन्तव व्रते व्वयं न रिष्येम कदाचन ॥ स्तोतारस्त ऽइह स्मसि ॥ ॐ भू० पूष्णे० पूषाणं० ॥ २ ॥ ततः प्रत्यधिदेवता

मू०
३९

भरणी तन्मन्त्रः ॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥ ॐ भू० यमाय० यमं० ॥ ३ ॥ ततश्चतुर्विंशतिदलेषु चतुर्विंशतिदेवानावाहयेत् ॥ ॐ भू० अग्नये० अग्निमा० ॥ १ ॥ ॐ भू० प्रजापतये० प्रजापतिं० ॥ २ ॥ ॐ भू० सोमाय० सोमं० ॥ ३ ॥ ॐ भू० रुद्राय० रुद्रं० ॥ ४ ॥ ॐ भू० अदितये० अदितिं० ॥ ५ ॥ ॐ भू० बृहस्पतये० बृहस्पतिं० ॥ ६ ॥ ॐ भू० सर्पेभ्यो नमः सर्पाना० ॥ ७ ॥ ॐ भू० पितृभ्यो० पितॄना० ॥ ८ ॥ ॐ भू० भगाय० भगं० ॥९॥ ॐ भू० अर्यम्णे० अर्यमाणं० ॥१०॥ ॐ भू० सवित्रे० सवितारं० ॥११॥ ॐ भू० विश्वकर्मणे० विश्वकर्माणं० ॥१२॥ ॐ भू० वायवे० वायुं० ॥१३॥ ॐ भू० इन्द्राग्नीभ्यां० इन्द्राग्न्यो० ॥१४॥ ॐ भू० मित्राय० मित्रं० ॥१५॥ ॐ भू० इन्द्राय० इन्द्रं० ॥१६॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥१७॥ ॐ भू० अद्भ्यो०

शा०

अपः० ॥१८॥ ॐ भू० विश्वेभ्यो० देवेभ्यो० विश्वान्देवाना० ॥१९॥ ॐ भू० विष्णवे० विष्णुं० ॥२०॥ ॐ भू० अष्टवसुभ्यो० अष्टवसूना० ॥२१॥ ॐ भू० वरुणाय० वरुणं० ॥२२॥ ॐ भू० अजैकपदे० अजैकपदं० ॥२३॥ ॐ भू० अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ २४ ॥ ततो मण्डलाद्बाह्ये दशदिक्पालानावाहयेत् ॥ ॐ भू० इन्द्राय० इन्द्रं० ॥१॥ ॐ भू० अग्नये० अग्निं० ॥२॥ ॐ भू० यमाय० यमं० ॥३॥ ॐ भू० निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ ॐ भू० वरुणाय० वरुणं० ॥ ५ ॥ ॐ भू० वायवे० वायुं० ॥ ६ ॥ ॐ भू० सोमाय० सोमं० ॥ ७ ॥ ॐ भू० ईशानाय० ईशानं० ॥ ८ ॥ ॐ भू० ब्रह्मणे० ब्रह्माणं० ॥९॥ ॐ भू० अनन्ताय० अनन्तं० ॥१०॥ इति अश्विनीनक्षत्रजननशान्तिः ॥

आद्यन्तयोः सर्वं पूर्ववत् कुर्यात् ॥

काशीस्थ-सुप्रसिद्ध- 'मध्यमेश्वर'-वास्तव्येनाऽग्निहोत्रिणा
स्व० पण्डितश्रीवायुनन्दनमिश्रेण विरचिता

मूलशान्ति-मघाजननशान्ति-ज्येष्ठाजननशान्ति-
रेवतीजननशान्ति-अश्विनीजननशान्ति-
प्रयोगाः समाप्ताः ।

अश्विनी नक्षत्र मन्त्र-'अश्विना तेजसा०' । अधिमन्त्र-'पूषन्तव०' प्रत्यधि मन्त्र-'यमाय त्वा०' । फिर कहे हुए द्रव्यों से प्रधान होम करना चाहिये । २४ दल में आवाहित देवों का ( २८ या ८ ) आहुति प्रत्येक को दे, इस का क्रम मूलशान्ति पद्धति के मूल में दिया है । वहीं पर देखिये ।

तत्तनूजेन पण्डितश्रीअग्निनारायणमिश्रेण विरचिता हिन्दीटीकासहिता
वाशिष्ठीहवनपद्धतिः समाप्ता ॥

—*—

# ❀ अथ मूलशान्ति-सामग्री ❀

-) केशर
चन्दन
)। रोरी
)॥ नारा
-), अबीर
)। बुक्का
)॥ मेंहदी की बुकनी
)॥ हरदी की बुकनी
)। पीली सरसो
-) सर्वौषधी
सप्तमृत्तिका
सप्तधान्य ऽ२॥
पञ्चपल्लव
पञ्चामृत
पंञ्चगव्य
)॥ सिन्दूर
=) माला फूल

)॥ धूपवत्ती
दीपवत्ती २५
)॥ कपूर
पेड़ा ऽ।
बतासा ऽ=
=) ऋतुफल
पान ५०
सोपाड़ी १२५
नारियल ३
कलशा ताँबे का १
कलशा मट्टी का ५
कलशा सौ छेद का
सिकहर १
बाँस की डलिया १
कम्बल का टुकड़ा १
सप्तविंशतिकूपजलानि
तीर्थजल

बाँस का सूप २७ बंधन का
खारूआँ १। गज
मलमल १॥ गज
चौकी काठ की १
पीढ़ा २
गौ प्रत्यक्ष स-वत्सा १
चावल ।ऽ८ सेर
यव ऽ॥
तिल्ली ऽ१।
खाँड़ ऽ।-
पञ्चमेवा ऽ=
वरणी ८
धोती ८
अँगौछा ८
आसन ८
पञ्चपात्र ८
आचमनी ८

सू०
४१

लोटा ८
कुशासन ८
यज्ञोपवीत १५
प्रधान को धोती दुपट्टा
गौ को वस्त्र २
दोहनी काँसे की १
कटोरा गौ के संग १
काँसेकी थाली अग्नि के साथ १
हवन का कटोरा १
चरुपात्र पीतल का १
सोने की सींग २
चाँदी का खुर ४
ताँबे की पीठ १
मोती की पूँछ १
घंटी २, घुँघुरू १०
पूर्णपात्र पीतलका १

( १०० शतौषधी )—
१ मयूरशिखा
२ बिष्णुक्रान्ता
३ सहदेइया
४ गदहपूर्णा
५ सरफोंका
६ बाराहीकन्द
७ घुघुची की पत्ती
८ सफेद भटकटैया
९ कड़ई तूंबी
१० बैर ११ रसोत
१२ करेमू १३ कोहड़ा
१४ नागरमोथा
१५ सफेद मंदार
१६ हैंसकी पत्ती
१७ रुद्रवन्ती
१८ असगंध १९ मुसली
२० कारैया २१ इन्द्रारून
२२ चिचिड़ा
२३ शंखबल्ली
२४ घिकुआर
२५ सनई
२६ आकाशबौर
२७ मेउड़ी २८ देवदारू
२९ बट ३० शमी
३१ पाकर ३२ परास
३३ पीपर ३४ आम
३५ गूलर ३६ जामुन
३७ जलकुम्भी
३८ बेंत की जड़
( वा अमिलतास )
३९ नागकेसर
४० अर्जुन वृक्ष
४१ अशोक
४२ मौलश्री
४३ स्मंतक वृक्ष
४४ सखुआ
४५ तालका वृक्ष

शा०

४६ तेजपत्ता
४७ गुलाब का फूल
४८ सेवती गुलाब
४९ मुलेठी
५० सिरिस
५१ बेल का वृक्ष
५२ भटकटैया
५३ खिरैंटी
५४ सहदेइया
५५ भटकटैया
५६ पेठा
५७ गंगेरन
५८ जातीपुष्प
५९ बकुल पुष्प
६० केतुकी पुष्प
६१ केला
६२ बड़ा निबुआ
६३ जयन्ती पुष्प
६४ अजवाइन

६५ पुंडरिक
६६ द्रोणपुष्प
६७ जलकुम्भी
६८ श्रीपर्णी
६९ मदन
७० चम्पा ७१ पद्माक
७२ कांचन पुष्प
७३ सिद्धेश्वरी
७४ बैर
७५ राजवृक्ष
७६ धवल का फूल
७७ कुन्द
७८ मुचकुन्द
७९ गाजिह्वा
८० क्षरकंदुफर
८१ अनार
८२ बीजपुरी नीबू
८३ ब्राह्मी
८४ आमलकी

८५ भृङ्गराज
८६ अधःपुष्पी
८७ मत्स्याक्षी
८८ वाटरुषक
८९ तरंगिणी
९० गुरुची
९१ निशाह्वा
९२ शतावरी
९३ बकुची
९४ कौवाठोठी
९५ बबुरी
९६ तुलसी
९७ कुश
९८ काश
९९ ऊख की जड़
१०० पीली सरसों की मूल

सर्वाभावे शतावरी,

सहदेवी वा

* भाषाटीकासहिता *

# मूलशान्ति-पद्धतिः

* समाप्ता *